द्धोपपादनीयम्, पुरुषोत्तमनामधेयात्प्रथमश्रुतस्येश्वरनाम्नो ब-
लवत्तया प्राधान्येनानुरोध्यत्वात्। यच्च 'स्थितोऽस्मि गत-
संदेहः करिष्ये वचनं तव' इति प्रतिज्ञातवानर्जुनो यावज्जीवं
शिवपूजानिरत एवावर्तत, तेनापि गीतासु कृष्णेन शिव एव
सकलपरभावलिङ्गमहिमशालित्वेन मुमुक्षुभिः शरणीकरणी-
यत्वेन चोपदिष्ट इत्यवसीयते। एतेन 'तमेव शरणं गच्छ'
इत्याद्यनन्तरम् 'सर्वगुह्यतमं भूयः शृणु मे परमं वचः'
इत्युपक्रम्य 'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज' इति
यदुपदिष्टं तद्विषयं तदनन्तरम् 'करिष्ये वचनं तव' इति
तं प्रति वचनमित्यपि शङ्का निरस्ता; तथा सति शिवपूजा-
मपि परित्यज्य विष्णुपूजाया एवार्जुनेन कर्तव्यत्वापत्तेः। याव-
ज्जीवं तेन शिवपूजैव कृता, न विष्णुपूजा। यत्तु शिवस्य
रात्रिकर्तव्यनित्यपूजार्थं क्लृप्तः सर्वोऽप्युपहारः कृष्णे सम-
र्पित इति वचनं तदपि कृष्णमूर्तौ शिवाविर्भावोऽस्तीति
शिवाराधनबुद्ध्येत्येतदभिप्रायम्। अत एव कृष्णार्जुनयोः
कैलासगमने सर्वोऽप्युपहारः शिवसमीपे दृष्टोऽर्जुनेनेत्यु-
क्तम्— 'तं चोपहारं सकलं नैशं नैत्यकमात्मनः। ददर्श त्र्य-
म्बकाभ्याशे वासुदेवे निवेदितम्॥' इति। यद्यपि 'अत्र
गीतामयाः सुष्ठु गिरः सत्या महीपते। दर्शितं मम सर्वत्वं
तेनासौ हतवान्रिपून्॥' इति युधिष्ठिरं प्रति कृष्णवचना-

नुसारेण 'करिष्ये वचनं तव' इति वचनं युद्धमात्रविषयं स्यात्, तथापि 'अनन्याश्चिन्तयन्तो माम्—' 'मामेकं शरणं व्रज' 'अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्' इत्यादि भगवद्वचनं श्रुतवताप्यर्जुनेन देवतान्तरं परित्यज्य शिवपूजनमेव कृतमित्यत्र नास्ति विवादः । अतो हि गीतासु स्वेन नित्यं पूज्यमानस्य शिवस्यैव महिमोपदिष्ट इति निश्चयोऽस्तीति कल्पनीयम्; अनुगीतावतारप्रश्नानुसारेण गीताश्रवणसमये संशयकल्पं ज्ञानम्, अनुगीताश्रवणानन्तरं दृढनिश्चय इति वा कल्पनीयम् । तस्मात्कृष्णाद्ब्राह्मणेभ्यश्च शिवस्यातिशयेन पाण्डवसंरक्षकत्वात् 'मूलं कृष्णो ब्रह्म च ब्राह्मणाश्च' इत्यत्र मूलत्वेन तद्ग्रहणमावश्यिकमिति तत्र निरुपपदं ब्रह्मेति पदं शिव एव परं ब्रह्मेति व्यञ्जयितुं प्रयुक्तमित्येतद्ब्रह्मलेपायते ॥ १३ ॥

एवं शिवे निरुपपदं ब्रह्मपदं प्रयुञ्जानेन श्रीवेदव्यासेन शिवस्य परब्रह्मभावो व्यञ्जित इति समर्थितम् । अथ कठवल्लीमन्त्रस्य ब्रह्मपरत्वनिर्णयाय शिवाभिधानश्रुतिं तत्र हेतुं कुर्वतापि तेन स व्यञ्जित इति दर्शयति—

अङ्गुष्ठमात्रमधिसूत्रगणं पुमांसं
ब्रह्मेति यच्छुकगुरुः स विनिर्णयाय ।

ईशान इत्यभिधया त्वयि क्लृप्तरूढ्या
त्वां ब्रह्म तेन च शिव स्फुटयांचकार ॥१४॥

कठवल्लीषु पठ्यते— ‘अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूतभव्यस्य न ततो विजुगुप्सते ॥’ इति ; योऽङ्गुष्ठमात्रः पुरुषस्तमीशानं विदित्वा तदनन्तरं न विजुगुप्सते आत्मानं गोपयितुं नेच्छत्यभयप्राप्तत्वादित्येवं विदित्वेत्यध्याहारेण मन्त्रार्थो वर्णनीयः। ‘अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः। ईशानो भूतभव्यस्य स एवाद्य स उ श्व एतद्वै तत् ॥’ इत्यादीनि च तत्र मन्त्रान्तराणि पठितानि। तत्र ब्रह्ममीमांसायामङ्गुष्ठमात्रः पुरुषो जीवः परिच्छिन्नपरिमाणत्वादिति पूर्वपक्षे प्राप्ते सिद्धान्तितम् ‘शब्दादेव प्रमितः’ इत्यधिकरणे प्रमितोऽङ्गुष्ठप्रमितः परमात्मा शब्दाद्ब्रह्माभिधानश्रुतिरूपादीशानशब्दादेवेति । आस्तामीशानशब्दयोगोपस्थितमैश्वर्यं लिङ्गम् , शीघ्रावगतादीशानशब्दादेव प्रमितः परमात्मेति निर्णेतुं शक्यमित्येवकारार्थः। न च ‘भूतभव्यस्य’ इत्यैश्वर्यप्रतियोग्युपादानात्केवलमैश्वर्यरूपलिङ्गसमर्पक एवायमीशानशब्दो न तु देवताविशेषसमर्पकोऽपीति शङ्कनीयम् , प्रतियोगिविशेषोपादानेऽपीशानशब्दे क्लृप्तया रूढ्या देवताविशेषोपस्थितेरनिवार्यत्वात्। तदेतदस्माभिः शिवतत्त्वविवेकादिषु प्रपञ्चेनोपपादितम्। अपरिच्छिन्नस्यापि परमेश्वरस्याङ्गु-

ष्ठमात्रत्वं हृदयकमलावच्छिन्नत्वेन लिङ्गरूपतयोपपद्यते । अत एव हंसोपनिषदि हृदयकमलावच्छिन्नस्य ब्रह्मणो लिङ्गरूपत्वमुक्तम्— ‘ एषोऽसौ परमहंसो भानुकोटिप्रतीकाशो येनेदं व्याप्तं तस्याष्टधा वृत्तिर्भवति पूर्वे दले पुण्ये मतिराग्नेये निद्रालस्यादयो भवन्ति याम्ये क्रौर्ये मतिर्नैर्ऋते पापे मतिर्वारुण्यां क्रीडायां वायव्ये गमनादौ बुद्धिः सौम्ये रतिप्रीतिरैशाने द्रव्यदानं मध्ये वैराग्यं केसरे जाग्रदवस्था कर्णिकायां स्वप्नो लिङ्गे सुषुप्तिः ’ इति । हृदयकमलावच्छिन्ने ब्रह्मणि खलु जीवस्य सुषुप्तिः सकलश्रुतिप्रसिद्धा ‘ तदभावो नाडीषु तच्छ्रुतेरात्मनि च ’ इत्यधिकरणे च समर्थिता । अतोऽत्र ब्रह्मणि सुषुप्तिरिति वक्तव्ये लिङ्गे सुषुप्तिरिति यदुक्तं तेन च ज्ञायते हृदयकमलावच्छिन्नं तत्तदङ्गुष्ठपरिमाणलिङ्गाकारतयोपासनीयं ब्रह्म श्रुत्या विवक्षितमिति । वामनपुराणेऽपि देवान्प्रति विष्णुना हृदयस्थस्येश्वरस्य लिङ्गरूपत्वमुक्तम्— ‘ ततोऽव्ययात्मा स हरिस्तद्धृत्पङ्कजशायिनम् । दर्शयामास देवानां मुरारिर्लिङ्गमैश्वरम् ॥ इति [1] ॥ १४ ॥

एवं श्रुतिपुराणेतिहासन्यायसूत्रपर्यालोचनया लब्धानि लिङ्गस्य परब्रह्मभावे साधकानि दर्शितानि । अथ तत्र वादिभिः प्रलपितानि बाधकान्युद्धर्तुं प्रतिजानीते—

एवं प्रमाणपरिपाटिकया विशङ्कं
ब्रह्म त्वमित्यवधृतेऽपि जलंधरारे ।
आरोपितैस्त्वयि परं जननादिदोषै-
स्त्वं ब्रह्म नेति वदतः प्रतिबोधयामः ॥१५॥

तत्र परोद्भावितजननादिसकलदोषसाधारणं परिहारमाह—

कल्पादिषु द्रुहिणकेशवरुद्ररूपै-
स्त्वत्तस्त्वमेव भगवन्नविभागमाप्तः ।
तैरेव तेषु विषमाक्ष परस्परस्मा-
दाविर्भवन्ननुकरोषि जयैषिवृत्तिम् ॥ १६ ॥

त्रिमूर्त्युत्तीर्णस्य श्रीसाम्बशिवस्य न कुतोऽपि जननं न तामसत्वं न पाशुपत्यवरणबाणासुरयुद्धादिकम् , किं तु संहाररुद्रतदंशभेदरूपाणां श्रीसाम्बशिवविभूतिविशेषाणामेव । तेषामपि न नियमेन ब्रह्मणो नारायणाच्च निकर्षः, किं तु क्वचिद्ब्रह्मणः क्वचिन्नारायणस्य क्वचित्तेषामिति कल्पभेदादेव व्यवस्थितः । तदेतच्छिवपुराणे वायुसंहितायाम् 'त्रयस्ते कारणात्मानो जाताः साक्षान्महेश्वरात्' इत्युपक्रम्य स्पष्टमुक्तम्— 'तपसा तोषयित्वा तं पितरं परमेश्वरम् । ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत् ॥ कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णू जगन्मयः । विष्णुश्च भगवांस्तद्वद्ब्रह्माणमसृ-

जत्पुनः ॥ नारायणं पुनर्ब्रह्मा ब्रह्माणं च पुनर्भवः । एवं कल्पेषु कल्पेषु ब्रह्मविष्णुमहेश्वराः । परस्परस्माज्जायन्ते परस्परजयैषिणः । तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः । प्रभावः कथ्यते तेषां परस्परसमुद्भवात् ॥' इति । 'तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः । तानि तानि प्रणीतानि विद्वांस्तत्र न मुह्यति ॥ अयं परस्त्वयं नेति संरम्भाभिनिवेशिनः । यातुधाना भवन्त्येव पिशाचाश्च न संशयः ॥' इति च । कर्मविपाकशास्त्रेऽपि परमेश्वरांशभूतानां तेषां भेदसाधने दोष उक्तः—'यो ब्रह्मविष्णुरुद्राणां भेदमुत्तमभावतः । साधयेदुदरव्याधियुक्तो भवति मानवः ॥' इति ॥ १६ ॥

एवं पारमार्थिकं परिहारमुक्त्वा साक्षात्साम्बशिवस्यैव ब्रह्मणो नारायणस्य च ललाटाज्जननमभ्युपेत्य तस्य श्लोकत्रयेण दोषत्वाभावमाह —

देव त्वमेव निटिलाद्यदि धातृविष्ण्वो-
राविर्बभूविथ ततस्तव को निकर्षः ।
नासापुटान्न हि विधेर्न च तस्य पौत्रा-
ज्जातोऽसि विष्णुरिव नापि मनुष्यमात्रात् ॥

नास्त्येव ते पुरुषवीर्यकृतानुषक्ति-
र्न स्त्रैणगर्भवसतिर्न च योनिजत्वम् ।

व्यक्त्या परं क्वचन ते शिव यद्यवद्य-
मेतैः कियत्खलु विभो न भवेन्मुरारेः ॥

अभ्यर्थनोपगमपूर्वमकर्मवश्य-
मावेदयद्भिरवतारमिमं समस्तम् ।
पौराणिकैः प्रकटिता परिहाररीति-
र्विश्वेश हन्त विदिताविदिता खलानाम् ॥

ब्रह्मणो नारायणस्य चाविमुक्तोपासनास्थलत्वेनातिपरिशुद्धाल्ललाटदेशादभिव्यक्तिः शिवस्य, न तु नारायणस्येव ब्रह्मणो नासापुटात्तस्य पौत्रात्काश्यपान्मनुष्यमात्राद्वा जननम् । शिवस्य प्रादुर्भावे क्वचिदपि नारायणस्येव न पुरुषवीर्यानुप्रवेशो न स्त्रीगर्भवासो न च तद्योनिप्रभवत्वम् । क्वचित्क्वचिदभिव्यक्तिमात्रेण यद्यवद्यमापद्येत तदोक्तैः षड्भिर्हेतुभिर्नारायणस्य कियदवद्यं नापद्येत ? यतः शिवस्याभिव्यक्तिमात्रं जननदोषत्वेनोद्घाटयद्भिर्बालिशैर्नारायणस्यैव तदतितरामुद्घाटितं स्यात् । रामकृष्णावतारयोर्मुख्यभूतस्य शोकमोहभीत्यादिपारवश्यस्य तत्र तत्र प्रपञ्चिततया तेनापि तद्रुपोद्बलितं स्यात् । यदि मन्येरन्ब्रह्माद्यभ्यर्थितस्य विष्णोरकर्मपारवश्योऽयं सर्वो व्यवहारः स्वेच्छापरिगृहीतमानुषभावादिनानर्थशोकमोहाद्यभिनय इति । इत्थं कुतोऽवगम्यते ? पुराणवचनेभ्य

इति चेत्तेभ्य एव ननु शिवस्यापि तत्र तत्राभिव्यक्तिर्ब्रह्मादि-प्रार्थितस्यैव स्वेच्छाधीनावगम्यते। तत्र बालिशैः किंचिद्विदि-तमिव किंचिदविदितमिव च व्यवह्रियत इति नेदं विद्वत्कृत्य-मिति भावः। तत्रादिवराहरूपस्य विष्णोर्ब्रह्मनासापुटाज्जनि-र्भागवते दर्शिता— 'इत्यभिध्यायतो नासाविवरात्सहसाऽनघ। वराहतोको निरगादङ्गुष्ठपरिमाणकः॥ तस्यापि पश्यतः खस्थः क्षणेन किल वारितः। गजमात्रः प्रववृधे तदद्भुतमभून्महत्॥' इति। वारितः, यत्र भूर्निमग्ना ततः प्रलयाब्धिजलादित्यर्थः। विष्णोः पुरुषवीर्यानुप्रवेशस्ततः स्त्री-गर्भवासस्तद्योनिप्रभवत्वं च भागवत एव वामनावतारे दर्शि-तम्— 'अदितिर्दुर्लभं लब्ध्वा हरेर्जन्मात्मनि प्रभोः। उपा-धावत्पतिं भक्त्या परया कृतकृत्यवत्॥ स वै समाधियोगेन काश्यपस्तदबुध्यत। प्रविष्टमात्मनि हरेरंशं ह्यवितथेक्षणः॥' सोऽदित्यां वीर्यमाधत्त तपसा चिरसंभृतम्। समाहितमना राजन्दारुण्यग्निमिवानलः॥ अदित्याधिष्ठितं गर्भं भगवन्तं सनातनम्। हिरण्यगर्भो विज्ञाय समीधे गुह्यनामभिः॥ इत्थं विरिञ्चस्तुतकर्मवीर्यः प्रादुर्बभूवात्ततनूरदित्याम्। चतु-र्भुजः शङ्खगदाब्जचक्रः पिशङ्गवासा नलिनायतेक्षणः॥ इति। अत्र ब्रह्मस्तुतत्वोक्त्या कंचित्कालं मनुष्यादिवद्गर्भे प्रसवितः सूचिता। वामनपुराणे तु स्पष्टमेवोक्ता। तत्र हि

विष्णुः क वर्तेत इति सर्वेषु लोकेष्वन्विष्य काप्यदृष्ट्वा मेरोरधस्तात्कचिद्देवमातरमादितिं तेजोऽधिकां दृष्ट्वा नूनमस्याः कुक्षौ वर्तेत इति तत्कुक्षिं प्रविष्टेन प्रह्लादेन तत्र दृष्टो हरिरिति प्रतिपादितम्— ' तां दृष्ट्वा देवजननीं सर्वतेजोधिकां मुने । विवेश दानवपतिरन्वेष्टुं मधुसूदनम् ॥ स दृष्टवाञ्जगन्नाथं माधवं वामनाकृतिम् । तं सर्वभूतवरदं देवमातुरथोदरे ॥' इति । शिवस्य ब्रह्मनारायणयोर्ललाटादभिव्यक्तिः स्वेच्छाधीनेति महाभारतकूर्मपुराणयोर्दर्शितम्— ' अनादिनिधनो देवश्चैतन्यादिसमन्वितः । ज्ञानानि च वशे यस्य तारकादीन्यशेषतः ॥ अणिमादिगुणोपेतमैश्वर्यं न च कृत्रिमम् । स हि पूर्वाधिको राजंस्तोषितस्तपसा विधेः । ललाटादनियोज्योऽपि पुत्रत्वेन प्रकल्पितः ॥' इति । 'अहं च भवतो वक्त्रात्कल्पान्ते घोररूपधृक् । शूलपाणिर्भविष्यामि क्रोधजस्तव पुत्रकः ॥' इति च । एवम् ' निर्दिष्टः परमेशेन महेशो नीललोहितः । पुत्रो भूत्वानुगृह्णाति ब्रह्माणं ब्रह्मणोऽनुजः ॥ तस्य हृत्कमलस्थस्य नियोगादब्जजो विभुः । ललाटं तस्य निर्भिद्य प्रादुरासीन्महेश्वरः ॥' इत्यादिशैवलैङ्गवचनमपि द्रष्टव्यम् । गर्भवासादिकं तु शिवस्य कचिदपि नास्तीत्यपि स्कान्दपुराणे सनत्कुमारसंहितायामुक्तम्— ' सृष्ट्यर्थं ब्रह्मणः पुत्रो ललाटादुत्थितः प्रभुः । भूतानामधिपो रुद्रो मृडस्तन्तिचरो वृषा ॥

स्वेच्छयापि न यस्याद्धुर्भूतसंसारसंग्रहम् । पुरात्रेरपि यत्पत्न्याः करादेवाभवत्सुतः ॥ स्वल्पांशेनापि गर्भस्य दुर्वासत्वमुदाहरन् ॥' इति । रामकृष्णावतारयोरिन्द्रजित्साल्वादियुद्धेषु तदीयशरैः क्षतो बद्धो मुमूर्छेत्यादिकं रामायणभारतादिप्रसिद्धम। अवसाने देहत्यजनं च 'गोप्रतारं ततो गच्छेत्सरय्वास्तीर्थमुत्तमम् । यत्र रामो गतः स्वर्गं सभृत्यबलवाहनः ॥ देहं त्यक्त्वा दिवं यातस्तस्य तीर्थस्य वैभवात् ॥' इत्येवंरूपभारतादिवचनप्रसिद्धम् । शुक्लशोणितसंभवः प्राकृतशरीरलिङ्गम् 'निर्दोषश्चेत्कथं विष्णुर्मानुषेषूपपद्यते । चिन्ताश्रमव्रणाज्ञानदुःखयुग्दृश्यते कथम् ॥ एष मे संशयो ब्रह्मन्हृदि शल्य इवार्पितः । अनिर्धार्योऽपरैर्मर्त्यैः सूक्तिशक्त्या तमुद्धर ॥' इत्यादिप्रश्नैर्ब्रह्माण्डादिपुराणेषु नारदाद्यैः शङ्कितः । 'स्त्रीपुंमलानुषङ्गात्मा देहोऽस्य न विजायते ॥ किं तु निर्दोषचैतन्यसुखां नित्यां स्वकां तनुम् । प्रकाशयति सैवेयं जनिर्विष्णोर्न चापरा ॥ तथाप्यसुरमोहार्थं परेषां च क्वचित्क्वचित् । दुःखाज्ञानश्रमादींश्च दर्शयेच्छुद्धसद्गुणः ॥ क्व व्रणादिः क्व चाज्ञानं स्वतन्त्रेऽचिन्त्यसद्गुणे । दौर्लभ्यायैव मोक्षस्य दर्शयेत्तान्यजो हरिः ॥ कृष्णो ह्यत्यक्तदेहोऽपि त्यक्तदेहस्य देहवत् । लोकानां दर्शयामास स्वरूपसदृशाकृतिम् ॥' इत्यादि वचनजातं प्रदर्श्य यत्नेन परिहरणीयम् । शिवस्य तु देहत्यागः क्वचिदपि न श्रुतः ।

किरातरूपधारिण्यपि तस्मिन्नर्जुनबाणैः क्षतिर्व्यथा वा नाभू-
दित्युक्तं भारते—'ततोऽर्जुनः शरैर्वर्षं किराते समवाकिरत् ।
तत्प्रसन्नेन मनसा प्रतिजग्राह शंकरः ॥ मुहूर्तं शरवर्षं तु प्र-
तिगृह्य पिनाकधृत्। अक्षतेन शरीरेण तस्थौ गिरिरिवाचलः ॥
स दृष्ट्वा बाणवर्षौघं मोघीभूतं धनंजयः । परमं विस्मयं चक्रे
साधु साध्विति चाब्रवीत् ॥' इति । एवं शिवस्य हरिविरिञ्च-
ललाटाद्याविर्भावमात्रस्य कर्माधीनत्वपरिहारार्थमैच्छिकत्वमुप-
पादनीयम् । विष्णोस्तु वीर्यानुप्रवेशगर्भवासयोस्तथात्वम् 'शु-
क्लेन जनिरन्येषां हरेः स्वतनुनैव तु । नित्योदितज्ञानतनोः
कुतः स्याच्छुक्लतो जनिः ॥ नावतारेष्वपि हरेर्देहे शुक्लादि-
संभवः । तथापि शुक्लसंस्थः सन्मातृदेहं प्रविश्य च ॥ विनापि
शुक्लं तत्रैव केवलं ज्ञानरूपकः । उदेति भगवान्विष्णुर्मायी लो-
कं विमोहयन् ॥' इत्यादिकं गारुडवाराहादिवचनजातं प्रदर्श्य
यत्नेनोपपादनीयम् । इत्थम् 'अजात इत्येवं कश्चिद्भीरुः प्र-
पद्यते । रुद्र यत्ते दक्षिणं मुखं तेन मा पाहि नित्यम् ॥' इति
श्वेताश्वतरोपनिषन्मन्त्रेण 'अजातमिममेवैकं मत्वा जन्मानि
भीरवः । रुद्रस्यास्य प्रपद्यन्ते रक्षार्थं दक्षिणं मुखम् ॥' इति
शिवपुराणवचनोपबृंहितेन 'ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते'
'न कारणम्—' इत्याद्यथर्वशिखावाक्येन च प्रागुदाहृतशिवपुरा-
णवचनोपबृंहितेन शिव एक एव जनिरहितः, अन्ये सर्वेऽपि

जनिमन्त इत्यवधारितेऽपि तस्य जनिमभ्युपेत्य जनेर्दोषत्वाभावः समर्थितः ॥ १७—१९ ॥

अथ तामसत्वं संहाररुद्रधर्ममपि परमशिवधर्ममभ्युपेत्य तस्य दोषत्वाभावः समर्थ्यते—

कालाग्निरुद्रवपुषा भगवन्भवार्तिं
कल्पावसानसमयेषु हरञ्जनानाम् ।
गृह्णासि शंकर तमः करुणैकमूर्तिः
शस्त्रं नृणां व्रणरुजं शमयन्निव त्वम् ॥ २० ॥

किमिह तामसत्वं दोषत्वेनापाद्यते ?—किं तमोगुणमुपकरणं कृत्वा सकलं जगत्संहरतीति नैर्घृण्यापादकतया तमोगुणोपकरणकत्वं दोषत्वेनापाद्यते, उत प्राकृतजनवत्तदभिभूतत्वम् ? आद्यपक्षनिरासार्थोऽयं श्लोकः । संसारमहाध्वाचिरगतागतातिश्रान्तान्प्राणिनः कांचित्कालं महासुषुप्त्यापादनेन विश्रान्तिं प्रापयितुं सकलं जगत्संजिहीर्षुर्महादेवस्तत्संहारोपकरणतया तमो गृह्णाति, यथा चिरकालं व्रणरुजार्तान्निद्राहाररहितानतिदुःखमनुभवतो मनुष्यान्व्रणरुजापनयनेन सुखयितुं तात्कालिककिंचिद्दुःखकरमपि व्रणच्छेदं करिष्यन्व्रणवैद्यस्तदुपकरणतया शस्त्रं गृह्णाति, न च शस्त्रग्रहणं व्रणच्छेदनं च तस्य नैर्घृण्यापादकं किं त्वयं प्राणी रक्षणीय इति परमदयालुत्वज्ञा-

पकमेव । तदेतदुक्तं शिवपुराणे— ‘ निदानज्ञस्य भिषजो रुग्णे हिंसां प्रयुञ्जतः । न किंचिदपि नैर्घृण्यं घृणैवात्र प्रयोजिका ॥’ इति ॥ २० ॥

अथ द्वितीयं विकल्पं निरस्यति—

निद्रालुता न तव शंकर शक्यशङ्का
क्रौर्यं किमप्यनुचिते विषये न दृष्टम् ।
नान्योऽपि कश्चन गुणस्तमसो विकारः
शङ्क्या कथं तव बुधैस्तमसाभिभूतिः ॥ २१ ॥

तमसाभिभूतस्य हि निद्रापारवश्यं भवति । न तदिह शक्यशङ्कम् । जागरेऽप्यनुचिते विषये तस्य क्रौर्यं भवति । तदपि शिवस्य क्वचिदपि न दृष्टम् । ननु त्रिपुरजलंधरादिवधमूलस्य क्रौर्यस्योचितविषयत्वेऽपि ब्रह्मपञ्चमशिरोलवनदक्षाध्वरध्वंसनादिदेवतानिग्रहमूलं क्रौर्यमनुचितविषयमिति चेत्; उच्यते । निग्रहस्तावद्द्विविधः— अनुग्रहोद्देश्यकस्तदनुद्देश्यकश्च । आद्योऽपि त्रिविधः— अनुग्राह्यानुग्रहोद्देश्यकस्तदितरानुग्रहोद्देश्यक उभयानुग्रहोद्देश्यकश्च । तत्राद्यः सदाचारानुवर्तनार्थः पुत्रशिष्यादिनिग्रहः । स तु गुण एव । द्वितीयो बहितरानुग्रहोद्देश्यकश्चेन्न दोषः, ‘एकस्मिन्यत्र निधनं प्रापिते दुष्टचारिणि । बहूनां भवति क्षेमं तत्र पुण्यप्रदो वधः ॥’ इति

वचनात् । स यथा मृगयया व्याघ्रादिवधः । चोरवध उभयानुग्रहार्थः, 'राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः । निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥' इति वचनात् । एवं निर्दोषाणां मध्येऽन्यतम एव शिवकृतः सर्वोऽपि निग्रहः । अतः पुत्रादिनिग्रहवद्ब्रह्मादिनिग्रहोऽप्युचितविषय एव । तदुक्तं शिवपुराणे— 'ये पुनर्निग्रहाः केचिद्ब्रह्मादिषु निदर्शिताः । तेऽपि लोकहितायैव कृताः श्रीकण्ठमूर्तिना ॥ अखण्डस्याधिपत्यं हि श्रीकण्ठस्य न संशयः । श्रीकण्ठाख्यां शिवो मूर्तिं क्रीडार्थमधितिष्ठति ॥ स एष एव देवादिनिग्रहीता यथोचितम् । ततस्तेऽपि विपाप्मानः प्रजाश्च विगतज्वराः ॥ निग्रहोऽपि स्वरूपेण विदुषां न जुगुप्सितः । अत एव हि दण्ड्येषु दण्डो राज्ञां प्रशस्यते ॥ प्रसिद्धिरीश्वरत्वेन कार्यवर्गस्य कृत्स्नशः । न स चेदीशतां कुर्याज्जगतः कथमीश्वरः ॥ हिते सदा निषण्णानामीश्वरः स्यान्निदर्शनम् । स कथं दूष्यते सद्भिरसतामेव निग्रहात् ॥ सर्वोऽपि निग्रहो लोके न च विद्वेषपूर्वकः । न हि द्वेष्टि पिता पुत्रं यो निगृह्यापि शिक्षयेत् ॥' इति । एवं निद्राक्रौर्ययोरभावेऽपि मोहादिविकारो यदि दृश्येत तदा कल्प्येतापि तमोऽभिभूतत्वम् । अतस्तत्र तस्याप्यभावात्तत्कल्पनं निरवकाशमिति भावः । कार्यदर्शनेन तदभिभूतत्वं कल्प्यते चेत्, तर्हि विष्णोरेव तत्कल्प्येत । तस्य प्राचुर्येण

निद्राबलिबन्धनभृगुपत्नीताटकावालिवधादिषु विविधासुरदेव-कारितच्छिद्रवधादिषु चानुचितविषये क्रौर्यं रामकृष्णावतार-योः शोकमोहादिविकारश्च दृष्टः । तस्य निद्रापारवश्यं तावद्भीष्मेण सभापर्वण्युक्तम्— 'आदिदेवः पुराणात्मा निद्रावशमुपागतः । शेते स्म सततं विष्णुर्मोहयञ्जगदव्ययः ॥' इति । तच्च ताम-सत्वलिङ्गमिति नरसिंहं प्रति शरभेणोक्तमिति स्कान्दे प्रतिपा-दितम् —'यत्तामसकलालेशगृहीतस्त्वं पयोनिधौ । निद्रापरवशः शेषे कथं तत्सात्त्विको भवान् ॥' इति । भारतयुद्धे श्रीकृष्णस्य तत्तद्वधोपायाश्छद्मव्यापाररूपाः शल्यपर्वणि दुर्योधनेन परिग-णिताः । तत्र हि भगवन्तं वासुदेवं प्रत्येवातिक्रुद्धस्य दुर्योधन-स्येमानि वचनानि—— 'कंसदासस्य दायाद न ते लज्जास्त्यनेन वै । अधर्मेण गदायुद्धे यदहं विनिपातितः ॥ ऊरू भिन्धीति भीमस्य स्मृतिं मिथ्या यदिच्छसि । कथं न ज्ञातमेतन्मे यदर्जुनमवोचथाः ॥ घातयित्वा महीपालानृजुयुद्धान्सहस्रशः । जिह्मैरुपायैर्निपुणैर्न ते लज्जा न ते घृणा ॥ अहन्यहनि शूरा-णां कुर्वाणः कदनं महत् । शिखण्डिनं पुरस्कृत्य घातितः स पितामहः ॥ अश्वत्थामसनामानं हत्वा नागं सुदुर्मते । आ-चार्यस्याजितः शस्त्रं किं तन्न विदितं मम ॥ स चानेन नृशं-सेन धृष्टद्युम्नेन वीर्यवान् । हन्यमानस्त्वया दृष्टो न चैनं सम-वारयः ॥ वधार्थं पाण्डुपुत्रस्य याचितां शक्तिमेव च । घटो-

त्कचेऽसर्जयथाः कस्त्वत्तः पापकृत्तमः ॥ छिन्नबाहुः प्रायगतस्तथा भूरिश्रवा रणे । त्वया निसृष्टेन हतः शैनेयेन दुरात्मना ॥ कुर्वाणश्चोत्तमं कर्म कर्णः पार्थजिघांसया । व्यसनेनाश्वसेनस्य पन्नगेन्द्रसुतस्य वै ॥ पुनश्च पतिते चक्रे व्यसनार्तः पराजितः । पातितश्च रणे कर्णश्चक्रव्यग्रोऽग्रणीर्नृणाम् ॥ यदि मां चैव कर्णं च भीष्मद्रोणौ च संयुगे । ऋजुना प्रतियुध्येथा न ते स्याद्विजयो ध्रुवम् ॥ त्वया पुनरनार्येण जिह्ममार्गेण पार्थिवाः । स्वधर्ममनुतिष्ठन्तो वयं चान्ये निपातिताः ॥ त्वया मायाविना कृष्ण मायामर्कप्रमोषणीम् । कृत्वा हतः सिन्धुपतिः किं तन्न विदितं मम ॥' इति । एवमुक्त्वा दुर्योधनेन 'न मे विषादो भीमेन पादेन शिर आहतम् । काका वा कङ्कगृध्रा वा निधास्यन्ति पदं क्षणात् ॥' इति भमिसेनस्याप्यपहासे कृते, दिवि देवताभिः कृतां दुर्योधनस्य प्रशंसां तस्योपरि पुष्पवृष्ट्यादिकं च वर्णयित्वा ततो वासुदेवादीनामनुचितशाठ्यकरणनिमित्तव्रीडाचिन्तादिकमप्युक्तम्— 'अत्यद्भुतानि ते दृष्ट्वा वासुदेवपुरोगमाः । दुर्योधनस्य पूजां च कृत्स्नां व्रीडामुपागमन् ॥ हतांश्चाधर्मतः श्रुत्वा शोकार्ताश्चुक्रुशुर्नृपाः । भीष्मं द्रोणं तथा कर्णं भूरिश्रवसमेव च ॥ तांस्तु चिन्तापरान्दृष्ट्वा पाण्डवान्दीनचेतसः । प्रोवाचेदं वचः कृष्णो मेघदुन्दुभिनिस्वनः ॥ इति । आश्वमेधिकेऽपि 'उदङ्को मुनि-

राययौ' इति प्रस्तुत्य तस्य श्रीकृष्णं प्रति शाठ्येन दुर्योधनादयो निहता इति कोपः कृत इति वर्णितम्— 'आयान्तमेत्य गोविन्दं समन्युर्मुनिरब्रवीत् । सर्वांस्त्वं धार्तराष्ट्रादीञ्शाठ्येनानाशयो नृपान् ॥ अतः शपेयं त्वां कृष्णेत्युक्तस्तं हरिराह सः॥ इति । एवं च नारायणे तमःकार्यतया शङ्क्यमानं निद्रादिकमित्थं परिहरणीयम्— तस्य निद्रा नयने निमील्य स्वात्मतत्त्वानुचिन्तनरूपा, शोकमोहादिरभिनयमात्रम्, अनुचितविषयं क्रौर्यं सर्वं तत्तद्वध्यदुष्कर्मविशेषायत्तमिति । इत्थमेव तत्र तत्र पुराणेषु रामायणभारतयोश्च परिहारः कृतो दृश्यते । तदेवं यथा नारायणस्य तमोभिभूतत्वशङ्का यत्नतः परिहरणीयासीन्नैवं शिवे कियत्यपि शङ्का प्रसरं लभते । तदेतत्सर्वं व्यतिरेकमुद्रयानेन श्लोकेन दर्शितम् ॥ २१ ॥

ननु विष्णोः सात्त्विकत्वप्रसिद्धेस्तद्विरोधि तामसत्वं शङ्कास्पदमपि सुपरिहरमिति चेत्तदपि शिवस्यैव सुप्रसिद्धमित्याह—

सत्त्वप्रवर्तनकरस्त्वमसि प्रतीतः<br>
सत्त्वं तनुश्च तव सत्त्वमयश्च यत्त्वम् ।<br>
एतावदद्रितनयाधिप सात्त्विकत्वं<br>
किं संभवेत्क्वचन तामसताविरोधि ॥ २२ ॥

'महान्प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः' इति श्वेताश्वतरोपनिषद्याम्नायते। शिवस्य सत्त्वं विग्रहस्तमः स्वकार्यकरणोपाधिः, विष्णोस्तु विपरीतमिति सूतसंहितायामुक्तम्—'यस्य मायागतं सत्त्वं शरीरं स्यात्तमो गुणः। संहाराय त्रिमूर्तीनां स रुद्रः स्यान्न चापरः॥ तथा यस्य तमः साक्षाच्छरीरं सात्त्विको गुणः। पालनाय त्रिमूर्तीनां स विष्णुः स्यान्न चापरः॥' इति। 'सत्त्वं देवा हरादयः' इति वासिष्ठरामायणे देवतिर्यङ्मनुष्यादिषु सत्त्वादिगुणविभागे शिवस्य प्राधान्येन सत्त्वमयत्वमुक्तम्। एतावत्सात्त्विकत्वं शिवादन्यत्र क्वापि न संभवति। विष्णोर्हि पालनोपाधितामात्रेण सत्त्वपरिग्रहः। स तु सर्वत्र सत्त्वप्रवर्तनस्वतन्त्रेण शिवेन प्रवर्तितस्य सत्त्वस्य पालनसामर्थ्यसिद्धये तत्र समुन्मेषेणापि संभवति॥ २२॥

ननु तामसत्वविरोधि सात्त्विकत्वं शिवस्यास्ति चेत्कथमयमुग्रो भीमश्च व्यपदिश्यत इत्याशङ्क्याह—

उग्रस्त्वमुत्तरतया जगतः समस्ता-
दूयासमुग्र इति तत्परता हि दृष्टा।
भीमोऽसि शंकर नियन्तृतयाऽखिलानां
वेदः प्रणौति यत एव महद्भयं त्वाम्॥ २३॥

उग्रशब्द उत्तरवाच्यप्यस्ति, 'उग्रोऽस्युग्रोऽहं स जातेषु भूयासम्' इत्युग्रत्वस्याऽऽशास्यत्वश्रवणात्। उत्पूर्वाद्गमेरुद्गच्छ-त्युत्तरो भवतीत्यस्मिन्नर्थे 'ऋज्रेन्द्राग्रवज्र—' इत्याद्यौणादिक-सूत्रेण रन्प्रत्ययान्ततया निपातितोऽयमुग्रशब्दः शिवस्य स-र्वोत्तरत्ववाची, न क्रौर्यवाची। भीमशब्दस्तु भयंकरत्ववा-च्येव तस्योत्कर्षमावहति, 'यदिदं किं च जगत्सर्वं प्राण एजति निःसृतम्। महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥' इति मन्त्रतः सर्वजगद्भयहेतुत्वस्य सकलनियन्तृ-परब्रह्मधर्मतावगमात्। अतोऽस्य सत्त्वप्रवर्तकत्वादिलक्षणं सात्त्विकत्वं कियन्तमपि तमोगन्धं न सहत इति भावः ॥ २३ ॥

सत्त्वप्रवर्तकत्वलक्षणं सात्त्विकत्वं हेत्वन्तरेणाप्युप-पादयति—

संख्यातिशायिगुण सत्त्वनिधिस्त्वमेव
ज्ञानं सुखं च यदि सत्त्वगुणादवाप्यम्।
जानीमहे तदुभयं त्वदधीनमीश
जाबालसूनृतमुखैर्ननु जन्मभाजाम् ॥ २४ ॥

जाबालोपनिषदि 'रुद्रस्तारकं ब्रह्म व्याचष्टे येनासा-वमृती भूत्वा मोक्षी भवति' इत्यविमुक्तोपासनया प्रसन्नस्य

शिवस्योपासनावसानकालेषु संसारतारकप्रणवार्थभूतपरब्रह्म-विद्याप्रदत्वं श्रूयते । तस्याश्च विद्यायाः फलं जीवन्मुक्तिसुख-रूपं परममुक्तिसुखरूपं च क्रमप्राप्यममृतीभवनमोक्षीभवन-शब्दाभ्यामभिधीयते । जीवन्मुक्तिसुखं च निरतिशयानन्द-रूपब्रह्मावगत्या तत्प्रयुक्ततुच्छविषयसुखवैतृष्ण्येन चोद्भवन्मु-क्तिसुखकल्पमेव । यदाहुः— 'यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् । तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥' इत्यादि । इदमेव शिवस्य ज्ञानप्रदत्वम् 'स नो देवः शुभया स्मृत्या संयुनक्तु' इति तैत्तिरीयोपनिषदि 'स नो बुद्ध्या शुभया संयुनक्तु' इति श्वेताश्वतरोपनिषदि च तत्प्रार्थनाद्वारा प्रतिपाद्यते । तत्र शुभत्वं जीवन्मुक्तिपरमुक्तिसुखप्रदत्वमेव, जाबालश्रुत्यैकार्थ्यात् । एवं ज्ञानसुखे प्रयच्छता शिवेनानुग्रा-ह्यस्य सत्त्वोद्रेकः कार्यः, 'सत्त्वात्सुखं च ज्ञानं च' इति तयोः सत्त्वाधीनत्वस्मृतेः । अतः शिव एव सत्त्वप्रवर्तकः, अन्ये सर्वे तत्प्रवर्तनीयतत्तत्कार्योपयोगिसुखोद्रेकविशेषभाज इति युक्तमेव ॥ २४ ॥

अथ शिवस्य ज्ञानप्रदत्वे हेत्वन्तराण्याह—

विद्याप्रदं वरद विश्वसिमः कमन्यं
विद्याधिपे भवति विश्वगुरौ प्रतीते ।

सर्वज्ञनामनि समुन्मिषदिन्दुचूडे
सव्यार्धविग्रहसमाकलितात्मविद्ये ॥ २५ ॥

'ईशानः सर्वविद्यानाम्—' इति मन्त्रे शिवस्य सर्वविद्याधिपत्यं प्रसिद्धम् । ततः सिद्धमेव सर्वविज्ञानानां तदधीनत्वम् । 'ज्ञानानि च वशे यस्य तारकादीन्यशेषतः' इति महाभारतेऽप्युक्तम् । ब्रह्माण्डपुराणेऽपि मध्यभागे नलोपाख्याने शिवस्य संहारकाल एव तदुपकरणत्वेन तमोगुणग्रहणं स्वतः सर्वदा विशुद्धज्ञानमयत्वं च वर्णितम्— 'सदसद्भावयुक्ताय प्रलये तामसात्मने । विशुद्धज्ञानतत्त्वाय तुभ्यं रुद्रात्मने नमः ॥' इति । विश्वगुरुत्वं शिवस्यैव शिवपुराणे प्रतिपादितम्— 'प्रतिसर्गे प्रसूतानां ब्रह्मणां शास्त्रविस्तरम् । उपदेष्टा स एवादौ कालावच्छेदवर्तिनाम् ॥ कालावच्छेदयुक्तानां गुरूणामप्यसौ गुरुः । सर्वेषामेव सर्वेशः कालावच्छेदवर्जितः ॥' इति । अमुमेवार्थं पतञ्जलिरपि योगशास्त्रे सूत्रयामास । तत्र हि 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' इति प्रस्तुत्य सूत्रितम् 'स पूर्वेषामपि गुरुः कालेनानवच्छेदात्' इति । किं च ऋषीणामपि सार्वज्ञ्ये समाने शिवस्य विशिष्य 'सर्वज्ञः' इति नाम तस्य विश्वगुरुत्वोपयोगिनित्यसिद्धनिरतिशयसार्वज्ञ्यसद्भावप्रयुक्तम् । अत एव शिवपुराणेऽपि शिवस्यादिगुरुत्वो-

पपादनार्थं तद्वर्णनात्प्राक्पठ्यते—'लोके सातिशयत्वेन ज्ञानै-श्वर्यं विलोकितम्। शिवे नातिशयत्वेन स्थितं प्राहुर्मनीषिणः ॥' इति। पातञ्जलेऽपि 'स पूर्वेषामपि गुरुः—' इति सूत्रात्प्राचीनं सूत्रम् 'तस्य निरातिशयं सर्वज्ञबीजम्' इति। शिवस्य चन्द्रशेखरत्वं प्रसिद्धम्। स चन्द्रः सकलज्ञानमय इति शिवशास्त्रेषु प्रसिद्धम्—'ज्ञानचन्द्रकलाचूडं दशदिग्बाहुमण्डलम्। त्रैगुण्यादिमयैर्भान्तं दिव्यैर्दशभिरायुधैः ॥' इति। ततश्च यथान्नसत्रप्रवृत्ताः क्षुधितानामन्नार्थिनामयमन्नदातेत्यभिज्ञायोपसर्पणेनानुग्रहणार्थं स्वप्रासादशिखरेष्वन्नध्वजं बध्नन्ति, एवं शिवोऽपि स्वयं ज्ञानप्रद इति प्रत्यायनेन लोकानुग्रहार्थं ज्ञानमयीं चन्द्रकलां शिरसि दधारेति ततोऽपि तस्य ज्ञानप्रदत्वमवगम्यते। अपि च भगवत्युमादेवी ब्रह्मविद्याप्रदायिनीति श्रुतिपुराणप्रसिद्धम्। तलवकारिणामुपनिषदि तस्याः शक्रादीन्प्रति श्वेताश्वतरोपनिषदि महर्षीन्प्रति च ब्रह्मविद्योपदेष्टृत्वमाम्नातम्। कूर्मपुराणे चेश्वरगीतासु योगाध्याये तस्याः सकललोकानुग्रहैकरसिकाशिवनियोगाद्ब्रह्मविद्याप्रदत्वमुक्तम्। तत्र हि ब्रह्मविष्णुरुद्रादीनां शिवनियोगेन सृष्टिपालनसंहारादिकर्तृत्वप्रतिपादनप्रकरणे शिववचनम्—'पार्वती परमा देवी सर्वविद्याप्रदायिनी। याभिध्याता विशेषेण सापि मद्वचनानुगा ॥' इति। एवंभूता भगवत्युमा यद्विग्रहैकदेशरूपा तस्य ज्ञानप्र-

दत्वं कैमुतिकन्यायसिद्धम् । ततः शिवमपहाय मुक्तिहेतुज्ञानप्रदत्वमन्यस्य कल्पयितुमशक्यमित्यर्थः ॥ २५ ॥

सुखप्रदत्वमपि हेत्वन्तरैरुपपादयति श्लोकद्वयेन—

शंभुः श्रुतोऽसि ननु तृप्तिविरागशाली
वैराग्यचिह्नभरितश्च महेश्वरस्त्वम् ।
तं त्वामपारसुखसागरमन्तरेण
कस्मात्सुखं भवितुमर्हति देहभाजाम् ॥ २६ ॥

यज्जीवरत्नमखिलागमलालनीयं
ये च त्रिनेत्र मृडशंकरनामधेये ।
एतैरपि स्फुटमनन्यसमाश्रयं ते
विख्याप्यते सकलजीवसुखप्रदत्वम् ॥ २७ ॥

शिवस्य सकलजीवसुखप्रदत्वे तस्य निरतिशयसुखास्पदत्वं हेतुं कृत्वा तस्य हेतोः समर्थनार्थं हेत्वन्तरमाद्यश्लोकेनोच्यते । शं भवतीति शंभुः । कर्त्रर्थे डुप्रत्ययः । सर्वेषामप्यात्मनां सुखात्मकत्वेऽपि विशिष्यैवं व्यपदेशो निरतिशयसुखात्मकत्वाभिप्रायः । अत एव तस्य नित्यतृप्तिर्नित्यं च विषयसुखवैतृष्ण्यं शिवशास्त्रेषु प्रसिद्धमाम्नायते— ‘ सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः । अनन्तशक्तिश्च वि -

भोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ॥ ज्ञानं विरागतैश्वर्यं तपः सत्यं क्षमा धृतिः । स्रष्टृत्वमात्मसंबोधो ह्यधिष्ठातृत्वमेव च । अव्ययानि दशैतानि नित्यं तिष्ठन्ति शंकरे ॥ ज्ञानमप्रतिमं यस्य वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च सह सिद्धं चतुष्टयम ॥' इति । ब्रह्मणः श्रुतमपि वैराग्यम् 'हिरण्यगर्भं पश्यति जायमानम्' इति जायमानावस्थायामेव शिवकटाक्षानुगृहीतस्य तस्य सहोत्पन्नमेव, न तु नित्यम् । अत एव 'सह सिद्धम' इत्युक्तम् । एवं स्वस्य निरतिशयसुखास्पदत्वेन तुच्छविषयसुखवैतृष्ण्यं ज्ञापयितुमेव विषयभोगलम्पटमूढादरणीयानि वस्त्रमाल्याभरणचन्दनाद्यनुलेपनानि विहाय गजचर्मभुजगास्थिभस्मानि तत्स्थानेषु परिगृहीतानि । तदेतद्भागवते काश्यपवचनेन स्फुटीकृतम्— 'हसन्ति यस्याचरितं हि दुर्भगाः स्वात्मन्रतस्याविदुषः समीहितम् । यैर्वस्त्रमाल्याभरणानुलेपनैः श्वभोजनं स्वात्मतयोपलालितम् ॥' इति । स्वात्मन्रतस्य स्वात्मानन्दामृतसागरनिमग्नस्य । समीहितमविदुषः निरतिशयस्वात्मानन्दनित्यास्वादप्रयुक्तविषयसुखवैतृष्ण्यस्फुटीकरणाभिप्रायमजानानाः । श्वभोजनं पतनानन्तरं श्वभिर्भक्ष्यमाणं शरीरम् । न च स्वस्य निरतिशयसुखत्वमन्येभ्यः सुखप्रदत्वे कथं हेतुः, बहुधनस्यापि कदर्यस्य धनदानादर्शनात्, धनसंतानादिरहितस्याप्यनुग्रहसमर्थस्य योगिनस्तद्दानदर्शनाच्चे-

ति शङ्कनीयम् , 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुत्यनुसारेण निरतिशयसुखास्पदतया शिवस्यैव स्वसुखमहासमुद्रकणिकायमानहैरण्यगर्भान्तसुखप्रदत्वप्रासिद्धेः। द्वितीयश्लोकेन शिवस्य सकलजीवसुखप्रदत्व एव साक्षाद्धेतव उच्यन्ते। जीवरत्नं शिव इति नाम। 'अथ हैनं ब्रह्मचारिण ऊचुः किंजप्येनामृतत्वं ब्रूहीति। स होवाच याज्ञवल्क्यः शतरुद्रीयेणेति। एतानि ह वा अमृतस्य नामधेयानि एतैर्ह वा अमृतो भवति।' इति जाबालोपनिषदि श्रीरुद्राम्नातानि नित्यमुक्तस्य शिवस्य नामधेयान्यमृतत्वसाधनान्युक्तानि। तेषां मध्ये शिवनामात्युत्कृष्टम्, 'विद्यासु श्रुतिरुत्कृष्टा तत्रैकादशिनी श्रुतौ। तत्र पञ्चाक्षरी तस्यां शिव इत्यक्षरद्वयम् ॥' इति शिवागमरहस्यविदां वचनात्, 'यद्व्यक्षरं नाम गिरेरितं नृणां सकृत्प्रसङ्गादघमाशु हन्ति तत्' इति भागवतेऽपि तत्प्रशंसनात्। अतस्तज्जीवरत्नमिति व्यवहरन्ति शिवागमविदः। तच्छिवंकरत्ववाचि 'शिव एको ध्येयः शिवंकरः' इत्यथर्वशिखोपनिषदि तस्य तथा व्याख्यातत्वात्। तद्व्याख्यानार्थं हि तत्र शिवंकरपदम्। 'सर्वैश्वर्यसंपन्नः सर्वेश्वरः' इति पूर्ववाक्येऽपि सर्वेश्वरनाम्नो यौगिकतया व्याख्यानार्थम् 'सर्वैश्वर्यसंपन्नः' इति पदान्तरसमभिव्याहारदर्शनात्। 'समेधयति यन्नित्यं सर्वार्थानामुपक्रमम्। शिवमिच्छन्मनुष्याणां तस्माद्देवः शिवः

स्मृतः ॥' इत्यानुशासनिकवचनेनापि शिवनाम्नः शिवंकरत्ववाचित्वं स्पष्टीकृतम् । इच्छैव हि संकल्पमात्रेण सकलप्रपञ्चस्रष्टुस्तस्य कारणम् । 'समा भवन्तु मे सर्वे दानवाश्चामराश्च ये । शिवोऽस्मि सर्वजन्तूनां शिवत्वं तेन मे सुराः ॥' इति कर्णपर्वणि शिववचनेनापि तस्य तद्वाचित्वं स्फुटीकृतम् । एवं च शिवशब्दात् 'तत्करोति' इति ण्यन्तादच्प्रत्यये 'णेरनिटि' इति णिलोपे च सति शिवनामनिष्पत्तिर्द्रष्टव्या । 'मृड सुखने' इति धातोः सुखयतीत्यर्थे निष्पन्नो मृडशब्दः । शंकरशब्दः शिवंकरत्ववाचीति स्फुटमेव । एवं तामसत्वदोषस्य बालिशप्रलपितस्योद्धारः कृतः ॥ २६ – २७ ॥

अथ पाशुपत्यवरणस्योद्धारः क्रियते—

यत्पाशुपत्यमवृणोरिति नित्यवाणी
शंसत्यवैमि तत एव तदीश नित्यम् ।
नित्यं यदिष्टहविरादिविधिस्तवाय
तस्यैव कल्पयति सा हि वरेण लाभम् ॥

'सोऽब्रवीद्वरं वृणा अहमेव पशूनामधिपतिरसानि' इति नित्यसिद्धा श्रुतिवागेव हि रुद्रेण वरो वृत इति ब्रवीति । अस्य श्रुतिवाक्यस्य प्रवृत्तेः प्रागेव वरेण वृतेन भाव्यम्, अन्यथा 'सोऽब्रवीत्' इति भूतार्थप्रयोगानुपपत्तेः । अतो

यत्र यत्रानादिकालप्रवृत्तेषु पूर्वपूर्वकल्पेष्विदं वाक्यं पठ्यते ततस्ततः पूर्वसिद्धेन पाशुपत्येन भाव्यमित्यस्मादेव वाक्यात्पाशुपत्यमनादीति सिध्यति । एवमेव हि यागहोमादीनां तया तया देवतया वरवरणलब्धत्वेन प्रतिपादितानां नित्यत्वं समर्थनीयम्, अन्यथा सर्वेषामपि वैदिककर्मणामनित्यत्वं प्रसज्येतेति कल्पभेदेन धर्माधर्मविप्लवः स्यात् । तस्माद्यथा नित्यसिद्धतत्तद्देवताकर्मसंबन्धप्रख्यापनद्वारा तत्तत्संनिधिश्रुतो वरवरणार्थवादः कर्मप्रशंसार्थः, एवमयमपि नित्यसिद्धपशुपतिभावप्रख्यापनद्वारा कर्मप्रशंसार्थोऽर्थवाद इत्यर्थः । इत्थं कर्मप्रशंसार्थासदर्थवादतामभ्युपेत्यैव तत्र विष्णोरापतन्नत्यन्तापकर्षोऽपि परिहरणीयः । अन्यथा 'त इषुꣳ समस्कुर्वताग्निमनीकꣳ सोमꣳ शल्यं विष्णुं तेजनम्' इति त्रिपुरसंहारोपकरणतया रुद्रशेषभूताया इषोर्मध्यावयवतां देवैस्तदिच्छयैव नीतत्वेन श्रुतस्य विष्णोरत्यन्तापकर्षः समापतन्ननिवार्यः स्यादिति भावः ॥ २८ ॥

वरणमभ्युपेत्यापि परिहारान्तरमाह—

शक्नोति नैव पशुपाशपतीन्विवेक्तुं
मुक्तः कथं भवति मोहित एष लोकः ।
इत्याकलय्य भगवन्यदि वा वरेण
स्पष्टीचकर्थ तदिदं किमु दूषणाय ॥ २९ ॥

पाशुपतव्रतानुष्ठानाधीनः पशुत्वहरणरूपो मोक्षः, तद्नुष्ठानं च देवमनुष्यादयो वयं पशवः पशूनां चास्माकं पतिः शिव इति ज्ञानसापेक्षम्, तज्ज्ञानाभावे पाशुपतव्रतानुष्ठानासंभवाल्लोकस्य मुक्तिरेव न स्यादिति विचार्य सकललोकानुग्राहकः शिव एव वरवरणव्याजेन निजं नित्यसिद्धं पाशुपत्यं सर्वलोकप्रसिद्ध्यर्थं स्पष्टीचकारेत्युपपद्यत इत्यर्थः। अयमर्थो लिङ्गपुराणे दर्शितः—'स्वतः सिद्धं पाशुपत्यं युष्माकं पशुतापि च। तदत्र दर्शयाम्यद्य पणबन्धविनोदतः॥' इति ॥२९॥

फलाभावेऽपि सृष्ट्यादिव्यापारवत्पाशुपत्यवरणं लीलामात्रं वास्त्विति परिहारान्तरमाह—

किं तेऽथ वा वरवृतेः फलचिन्तनेन
लीलैव शूलधर संततमीदृशी ते।
उद्दिश्य किं फलमवाप्तसमस्तकामः
शश्वत्सृजस्यवसि संहरसि प्रपञ्चम् ॥ ३० ॥

पाशुपत्यवरणमेव नास्तीति, तत्सत्त्वेऽपि नित्यसिद्धस्यैव पाशुपत्यस्य प्रत्यायनार्थं तदिति, तथाभूतफलाभावेऽपि सृष्ट्यादिवल्लीलामात्रं तदिति च परिहारैः पाशुपत्यस्यानादिसिद्धत्वमुपपादितम्। तस्य तथात्वानङ्गीकारे बाधकमाह—

आगन्तुकं यदि भवेत्तव पाशुपत्य-
मर्थोऽपि निस्तरति नानुपपत्तिसीमाम् ।
संसारिणो हि सकलाः पशवो निरुक्ताः
स्यादादिमत्कथमधीश्वर तत्पतित्वम् ॥ ३१ ॥

पाशुपत्यं हि सर्वाञ्जीवान्प्रत्याधिपत्यरूपं सर्वेश्वरत्व-मेव, 'आत्मानः पशवः प्रोक्ताः सर्वे संसारवर्तिनः । तेषां पतित्वाद्देवेशः शिवः पशुपतिः स्मृतः ॥' इति शैवलैङ्गादिपु-राणोद्घोषात् । अतस्तदनादिसिद्धपरब्रह्मधर्मतया धर्मिग्राहक-मानसिद्धं नादिमत्कल्पयितुं युक्तमित्यर्थः । एतेन 'तत्तेजोऽसृ-जत' इत्यादौ भूतार्थप्रत्ययसत्त्वेऽपि यथा तेजःप्रभृतीनां न नित्यत्वं तथा पाशुपत्यस्याप्यास्त्वित्यपि शङ्का निरस्ता । तेजः-प्रभृतीनामनित्यत्वेऽपि प्रवाहानादिपूर्वकल्पवृत्ततत्तत्सृष्टेरतीत-त्वं भूतार्थप्रत्ययस्यालम्बनमित्युपपद्यते । न चेह भूतभाविवर्त-मानसकलजीवाधिपत्ये पारमेश्वरनित्यासिद्धधर्मे तन्न्यायः प्रव-र्तयितुं शक्यते ॥ ३१ ॥

एवं प्रसाधितं पाशुपत्यस्यानादित्वं पशुत्वप्रतिबन्ध्यापि स्थापयति—

आस्तां पतित्वमदसीयमिदं पशुत्वं
नार्हत्यधीश कथमप्यधुनातनत्वम् ।

यद्यस्ति तस्य वरणश्रवणेषु काचि-
न्निर्वाहरीतिरपरा न किमत्र सा स्यात् ॥३२॥

पतित्ववरणकाले सर्वेषामात्मनां पशुत्वमपि सह वृत-मिति लैङ्गादिपुराणेषु प्रसिद्धम् । तथा भारतेऽपि कर्णपर्वणि—'पशुत्वं चैव मे लोकाः सर्वे कल्पन्तु पीडिताः । पशूनां च पतिश्चाहं भविष्यामि सुरोत्तमाः ॥ इति देवा वचः श्रुत्वा देवदेवस्य भूपते । विषादमगमन्सर्वे पशुत्वं प्रति शङ्किताः ॥' इति । तत्पशुत्वं सादि भवितुं नार्हतीति तद्वरणश्रवणे यः परिहारः प्रागुक्तेष्वन्यतमोऽन्यो वा स एव पतित्ववरणश्र-वणेऽप्यस्त्वित्यर्थः ॥ ३२ ॥

भवतु पशुत्वमपि सादीत्यत्राह—

मायादिपाशदृढबन्धविमोहितानां
यत्स्वामिकर्मकरणं यजनादिरूपम् ।
गौणं पशुत्वमिदमेव हि देहभाजा-
मेतच्चराचरपते कथमादिमत्स्यात् ॥ ३३ ॥

ननु लोकानां शिवपशुत्वं न मुख्यं शिवं प्रति गवाश्वादि-रूपवत्त्वम्, तदभावात् । किं तु यथा गवाश्वादीनां स्वा-मिना पाशैर्बद्धानां दोहनवहनादिकार्यैस्तदुपकर्तृत्वमेवं शिवेन मायाकर्मादिभिर्बद्धानां यज्ञादिभिराराधनरूपैः शिवोपकर्तृ-

त्वमेव तद्वाच्यम् । तच्चानादिसंसारप्रवाहायातं कथमपि ना-दिमत्त्वमर्हतीत्यर्थः । इत्थं गौणमेषां पशुत्वं शिवपुराणे स्पष्टीकृतम्— 'ब्रह्माद्याः स्थावरान्ताश्च देवदेवस्य शूलिनः । पशवः परिकीर्त्यन्ते संसारवशवर्तिनः ॥ तेषां पतित्वाद्देवेशः शिवः पशुपतिः स्मृतः । मलमायादिभिः पाशैः स बध्नाति पशून्पतिः ॥ स एव मोचकस्तेषां भक्त्या सम्यगुपासितः ॥ चतुर्विंशतितत्त्वानि मायाकर्मगुणा अमी । विषया इति कथ्यन्ते पाशा जीवनिबन्धनाः ॥ ब्रह्मादिस्तम्बपर्यन्तान्प-शून्बद्ध्वा महेश्वरः । पाशैरेतैः पतिर्देवः कार्यं कारयति स्वकम् ॥' इति ॥ ३३ ॥

अथ परमेश्वरं प्रति वरदातुः कस्यचिदसंभवादपि वरव-रणश्रवणादीनि तुच्छीकरोति—

त्वामामनन्ति परमीश्वरमीश्वराणां<br>
त्वां दैवतं च परमं खलु दैवतानाम् ।<br>
त्वामेव नाथ परमं च पतिं पतीनां<br>
कस्माद्धृतं वरद विश्वसिमो वरं ते ॥ ३४ ॥

'तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैव-तम् । पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमी-ड्यम् ॥' इति श्वेताश्वतरोपनिषन्मन्त्रार्थोऽत्रानुसंहितः ।

ईश्वराणां जगन्नियन्तॄणाम् । दैवतानां जगदाराधनीयानाम् । पतीनां जगत्पालकानाम् । एवं पाशुपत्यवरणं दोष इत्येतत्प्रत्युक्तम् ॥ ३४ ॥

अथ गङ्गाधारणमपकर्षहेतुरिति प्रलपतो बालिशान्प्रतिबोधयति—

गङ्गा धृता न भवता शिव पावनीति
नास्वादितो मधुर इत्यपि कालकूटः ।
संरक्षणाय जगतां करुणातिरेका-
त्कर्मद्वयं कलितमेतदनन्यसाध्यम् ॥ ३५ ॥

गङ्गाधारणं तावदनन्यसाध्यमिति महाभारते भगीरथं प्रति गङ्गावचनेनावगतम्— 'करिष्यामि महाभाग वचस्ते नात्र संशयः । वेगं तु मम दुर्धार्यं पतन्त्या गगनाच्च्युतम् ॥ न क्षमस्त्रिषु लोकेषु कश्चिद्धारयितुं नृप । अन्यत्र विबुधश्रेष्ठान्नीलकण्ठान्महेश्वरात् ॥' इति । रामायणेऽपि तं प्रति ब्रह्मवचनेनावगतम्— 'गङ्गायाः पतनं राजन्पृथिवी न सहिष्यते । तां वै धारयितुं वीर नान्यं पश्यामि शूलिनः ॥' इति । भागवते तु— 'कोऽपि धारयितुं वेगं पतन्त्या मे महीतले । न चेद्भूमितलं भित्त्वा नृप यास्ये रसातलम् ॥' इति पृष्टवतीं प्रति भगीरथवचनेनाप्यवगतम्— 'धारयेद्भू-

मतीवेगं रुद्रस्त्वात्मा शरीरिणाम् । यस्मिन्नोतमिदं प्रोतं विश्वं शाटीव तन्तुषु ॥' इति । इदं च गङ्गाधारणं न केवलं भगीरथपितामहोत्तारणमात्रार्थम्, किं तु गङ्गावेगाद्भूविदारण-परिहारेण जगत्संरक्षणार्थमपि सर्वोपकारकस्यागस्त्यनिपीतस्य समुद्रस्य परिपूरणेन तदर्थमित्यपि भारते समधिगतम् । तत्र त्वरण्यपर्वण्यगस्त्यानिपीतस्य लोकपावनतया सर्वोपकारकस्य समुद्रस्य परिपूरणोपायं प्रष्टुमागतान्देवान्प्रति ब्रह्मणा 'भगीरथः स्वपितामहोत्तारणार्थं गङ्गामानेष्यति, तया च समुद्रस्य परिपूरणं भविष्यति, विगतज्वरा भवथ' इत्युक्तमिति प्रपञ्चितम् । एवमनन्यसाध्यं गङ्गाधारणं जगत्संरक्षणार्थं शिवेन कृतं न तु स्वस्यापि पावनीयं गङ्गेति तद्धारणं कृतम् । यथा कालकूटविषं मधुरमिति नास्वादितं किं तु जगत्संरक्षणार्थमेव, एवमिदमपीति दृष्टान्ततया संप्रतिपन्नकालकूट-ग्रसनोदाहरणम् । तद्धि जगत्संरक्षणार्थमिति शिवपुराणादिषु प्रसिद्धमेव । भागवतेऽपि तथोक्तम् । तत्र हि कालकूटप्रादुर्भावानन्तरम्—'तदुग्रवेगं दिशि दिश्युपर्यधो विसर्पदुत्सर्पदसह्यवीर्यम् । भीताः प्रजा दुद्रुवुरङ्ग सेश्वरा अरक्ष्यमाणाः शरणं सदाशिवम् ॥' इत्युक्त्वा, ततस्तत्प्रसादनाय त्रिमूर्त्युत्तीर्ण-निस्त्रैगुण्यशिवाभिधानपरब्रह्मरूपपरमात्मतत्त्वतया तस्य कैलासवासिनः श्रीकण्ठरुद्रस्य शिवविभूतिविशेषस्य प्रजापति-

भिः कृते स्तोत्रे कालकूटसंहरणमिदं ब्रह्मादीनामप्यसाध्यम् , अतस्त्वदेकशरणा वयमागता इति ज्ञापयितुमुक्तम्— ' न ते गिरित्राखिललोकपालविरिञ्चिवैकुण्ठसुरेन्द्रगम्यम् । ज्योतिः परं यत्र रजस्तमश्च सत्त्वं न यद्ब्रह्म निरस्तभेदम् ॥' इति । गुणविशेषोपाधिकब्रह्मविष्णुरुद्रभेदरहितं तत्समष्टिरूपपरमशिवात्मकमित्येतन्निरस्तभेदमित्यनेनोच्यते ॥ ३५ ॥

एवं लोकोपकारार्थं शिवेन कृतं गङ्गाधारणमपि यदि त्रिविक्रमावतारकाले स्यात्तदा ' यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्नि विधृतेन शिवः शिवोऽभूत् । ध्यातुर्मनश्शमलशैलनिसृष्टवज्रं ध्यायेच्चिरं भगवतश्चरणारविन्दम् ॥' इत्यादिपञ्चषाक्षरश्रवणपरितुष्टानां कूपमण्डूकानां प्रलपितस्य कियानप्यवकाशः स्यादपि । इदं तु धारणं भगीरथप्रसादितायाश्चतुर्मुखलोकस्थिताया हैमवत्या एव गङ्गाया इत्येतद्विभज्य दर्शयति—

> गङ्गापि नैव भवता करिचर्मधारि-
>
> न्मूर्ध्ना धृता मधुरिपोश्चरणात्क्षरन्ती ।
>
> किं तु प्रसादनपराय भगीरथाय
>
> दत्त्वा वरं शतधृतेः सदनात्पतन्ती ॥ ३६ ॥

द्विविधा गङ्गा— एका हिमवतः कन्यका ब्रह्मलोके प्रव-

हन्ती केनचिदंशेन ब्रह्मलोकाद्भूलोकं भगीरथेनानीता, अन्या तूर्ध्वप्रसारितत्रिविक्रमरूपभगवच्चरणप्रभवा सत्यधः पतन्ती केनचिदंशेन व्योम्नि स्थिता देवानां विहारोपयोगिन्यंशान्तरेण मेरोरुपरि ब्रह्मपुर्याश्चतसृषु दिक्षु प्रवहानिलेन चतुर्धा विभक्ता निपत्य प्राच्यादिसमुद्रान्प्रविष्टा। तथा हि वामनपुराणे— 'श्वेताङ्गी पद्मपत्राक्षी नीलकुञ्चितमूर्धजा। श्वेतमाल्याम्बर-धरा कुटिला नाम चापरा॥' इत्युमाया ज्यायसीं हिमवत्सुतां प्रस्तुत्योक्तम्— 'दिवाकरैश्च रुद्रैश्च वसुभिश्च तपस्विनी। कुटिला ब्रह्मलोकं तु नीता शशिकरप्रभा॥ अथोचुर्देवताः सर्वाः किं न्वियं जनयिष्यति। पुत्रं तारकहन्तारं ब्रह्मन्व्या-ख्यातुमर्हसि॥ ततोऽब्रवीत्सुरपतिर्नेयं शक्ता तपस्विनी। शार्वं धारयितुं तेजो वराकी मुच्यतामियम्॥ ततस्तु कुटिला क्रुद्धा ब्रह्माणं प्राह नारद। तथा यतिष्ये भगवन्यथा शार्वं सुदुर्धरम्॥ धारयिष्याम्यहं तेजस्तथैव शृणु सत्तम। तपसाहं सुतप्तेन समाराध्य जनार्दनम्॥ यथा हरस्य तद्वीर्यं धारयि-ष्ये पितामह। तथा देव करिष्यामि सत्यं सत्यं मयोदितम्॥ ततः पितामहः क्रुद्धः कुटिलामतिदारुणाम्। भगवानादिश-द्ब्रह्मा सर्वेशः स महामुने॥ यस्मान्मद्वचने पापे न स्थितं कुटिले त्वया। तस्मान्मच्छापनिर्दग्धा त्वमद्यापो भविष्यसि॥ इत्येवं ब्रह्मणा शप्ता हिमवद्दुहिता मुने। आपोमयी ब्रह्मलोकं

पावयामास वेगिनी ॥ तामुत्थितजलां दृष्ट्वा बबन्ध प्रपितामहः । ऋक्सामाथर्वयजुर्भिर्वाङ्मयैर्बन्धनैर्दृढम् ॥ सा बद्धा संस्थिता ब्रह्मंस्तथैव गिरिकन्यका । आपोमयी पावयन्ती ब्रह्मणो विमला जटाः ॥' इति । अत्र गङ्गैव कुटिलेति नामान्तरेणोक्ता, 'एते वै शैलराजस्य सुते लोकनमस्कृते । गङ्गा च सरितां श्रेष्ठा उमादेवी च राघव ॥' इति रामायणे हिमवत्सुतायामुमाज्येष्ठायां कुटिलापदस्थाने गङ्गापददर्शनात्, 'अथ ज्येष्ठां सुराः सर्वे देवतार्थचिकीर्षया । शैलेन्द्रं वरयामासुर्गङ्गां त्रिपथगां नदीम् ॥ ददौ धर्मेण हिमवांस्तनयां लोकपावनीम् । स्वच्छन्दपथगां गङ्गां त्रैलोक्यहितकाम्यया ॥ प्रतिगृह्य ततो देवास्त्रैलोक्यहितकारकाः । गङ्गामादाय वै गच्छन्कृतार्थेनान्तरात्मना ॥' इत्युदाहृतवामनपुराणोक्तकुटिलावृत्तान्तस्य गङ्गायामेव रामायणे संक्षिप्य प्रतिपादनाच्च । अत्र हि 'देवतार्थचिकीर्षया' इति 'वरयामासुः' इति 'धर्मेण' इति चोक्त्या तारकादिवधादिरूपदेवकार्यचिकीर्षया सेनान्य उत्पादनाय शिवस्य भार्यार्थे तामेव कन्यां शिवस्य धर्मप्रजार्थं वृणीमह इति वरसंबन्धिकर्तृककन्यावरणप्रकारेण वरयामासुः, सोऽपि कन्यादानधर्मेण ददावित्यर्थः प्रतीयते । अतो वामनपुराणोक्तार्थच्छायापत्तिदर्शनात्तामादाय ब्रह्मणोऽन्तिकं निन्युरित्यर्थो ग्राह्यः । तदनन्तरं ब्रह्मशापान्नदी-

रूपप्राप्तिः 'त्रिपथगां नदीम्' इत्यनेन सूचिता। इदं हि विशेषणं न प्राचीनतदीयरूपकीर्तनपरम्, 'भगवञ्श्रोतुमिच्छामि गङ्गां त्रिपथगां नदीम्। त्रैलोक्यं कथमाक्रम्य गता नदनदीपतिम्॥' इति रघुनायकपृष्टेन विश्वामित्रेण त्रिपथगारूपप्राप्तिवर्णनोपोद्घातत्वेनास्याः कथाया वर्ण्यमानत्वात्, प्रागेव त्रिपथगारूपसद्भावे देवैरिदानीं नीतत्वोक्त्ययोगाच्च। किं तु भाविनीं संज्ञामाश्रित्येदं विशेषणम्। 'शैलेन्द्रो हिमवान्नाम धातूनामाकरो महान्। तस्य कन्याद्वयं नाम रूपेणाप्रतिमं भुवि॥' इत्युपक्रमादतिसौन्दर्यशालितया शिववीर्यधरणक्षमतां विचिन्त्य कन्यारूपेण ब्रह्मलोकं नीतेत्येवार्थो ग्राह्यः। अथ 'त्रिपथगाम्' इतिवत् 'नदीम्' इत्येतदपि भाविनीं संज्ञामाश्रित्य, नदीरूपप्राप्तिर्वामनपुराणोक्तरीत्या ब्रह्मशापेन, त्रिपथगारूपप्राप्तिर्नदीरूपं प्राप्य ब्रह्मलोके स्थितायास्तस्या भगीरथानुरोधाद्भुव्यवतरणेन पातालप्रवेशेन चेति हृदि निधाय त्रिपथगारूपप्राप्तेः पृष्टत्वात्सैव नवभिः सर्गैः प्रपञ्चिता। नदीरूपं प्राप्य ब्रह्मलोके स्थितिस्त्वपृष्टत्वान्न प्रपञ्चिता, किं तु सिद्धवत्कृत्य तत्र तत्र सूचिता। यद्वह्निना शिववीर्ये निपीते सेनान्युत्पत्तिमलभमानान्ब्रह्मसमीपं गतान्देवान्प्रति— 'इयमाकाशगा गङ्गा यस्यां पुत्रं हुताशनः। जनयिष्यति देवानां सेनापतिमरिंदमम्॥ ज्येष्ठा शैलेन्द्रदुहिता

जनयिष्यति तं सुतम् । उमायास्तद्बहुमतं भविष्यति न संशयः ॥'
इति ब्रह्मणो वचने 'इयमाकाशगा गङ्गा' इति निजलोक
एव संनिहिताकाशगतत्वेन गङ्गा निर्दिष्टा, यच्च भगीरथेन
गङ्गावतरणार्थं ब्रह्माणमुद्दिश्य तपः कृतमित्युक्तम् , यच्च प्रस-
न्नेन ब्रह्मणा वरं दातुमागतेन 'इयं हैमवती गङ्गा ज्येष्ठा
हिमवतः सुता' इति ब्रह्मलोकात्समागतैव गङ्गा 'इयम्' इति
निर्दिष्टा, एतैर्लिङ्गैर्गङ्गाया नदीरूपप्राप्तिर्ब्रह्मलोके स्थितिश्च
सूचिता । एवं तावद्वामनपुराणोक्ता कुटिला गङ्गैवेति रामाय-
णानुसारेणावगम्यते । किं च वामनपुराण एवाग्निमोपाख्या-
नानुसारेणाप्यवगम्यते । अग्ने हि शिववीर्यं निपीतवन्तं वह्निं
प्रस्तुत्यैवमुपाख्यायते— 'यत्तत्पीतं हुताशेन स्कन्नं शुक्रं
पिनाकिनः । तेन क्रान्तोऽभवद्ब्रह्मन्मन्दतेजा हुताशनः ॥
वैश्वानरस्ततस्तूर्णं ब्रह्मलोकं जगाम सः । स गच्छन्कुटिलां
देवीं ददर्श पथि पावकः ॥ तां दृष्ट्वा प्राह कुटिलां तेज एत-
त्सुदुर्धरम् । महेश्वरेण संत्यक्तं निर्दहेऽहं वरानने ॥ तस्मात्प्र-
तीच्छ पुत्रोऽयं भवदीयो भविष्यति । इत्यग्निनोक्ता स्मित्वा
तु कृत्वा स्ववपुरुन्नतम् । प्रक्षिपात्माम्भसि प्राज्ञेत्येवमाह
मह्लापगा ॥ ततो विसृष्टं तद्देवी शार्वं तेजो ह्यपूजयत् ।
हुताशनोऽपि भगवान्कामचारी जगाम सः ॥ पञ्चवर्षसह-
स्रान्ते कुटिला ज्वलनोपमा । धारयन्ती तदा गर्भं ब्रह्मणः

स्थानमागता ॥ तां दृष्टवानब्जजन्मा अन्तर्वत्नीं महायशाः । दृष्ट्वा पप्रच्छ केनायं तव गर्भः समाहितः ॥ सा चाह शांकरं यत्तच्छुक्रं पीतं हि वह्निना । तदशक्तेन तेनाद्य निःक्षिप्तं मयि सत्तमम् ॥ पञ्च वर्षसहस्राणि धारयन्त्याः पितामह । गर्भस्य वर्तते कालो नावपद्येत कर्हिचित् ॥ तच्छ्रुत्वा भगवानाह गच्छ त्वमुदयं गिरिम् । तत्रास्ति योजनशतं रौद्रं शरवणं महत् ॥ तत्रैनं क्षिप सुश्रोणि विस्तीर्णे गिरिसानुनि । दशवर्षसहस्रान्ते ततो बालो भविष्यति ॥ सा श्रुत्वा ब्रह्मणो वाक्यं कुटिला गिरिमागमत् । आगत्य गर्भं तत्याज सुखेनैव महामुने ॥ सा तु संत्यज्य तं बालं ब्रह्माणं सहसाऽगमत् । आपोमयी ब्रह्मशापात्संजाता कुटिला सती ॥' इति । एवं वह्निविसृष्टशिववीर्यधारणोक्त्यापि कुटिला गङ्गेति निश्चीयते, रामायणे पुराणान्तरेषु च गङ्गायां वह्निना शिववीर्यं विसृष्टमित्यैककण्ठ्येन प्रतिपादनात् । एवं तावदाद्या हैमवती गङ्गा ब्रह्मशापान्नदीत्वं प्राप्ता भगीरथानुरोधाद्भुवं पातालं च प्राप्ता सती त्रिपथगा जातेति सप्रमाणमुपपादिता । अन्या तु विष्णुपदी गङ्गा क्वचिदूर्ध्वप्रसारिता त्रिविक्रमचरणाम्बुजसंक्षालनार्थं सत्यलोकस्थितब्रह्मकमण्डलुनिःसृतजलरूपा वर्णिता । अन्यत्र तच्चरणनिर्भिन्नोर्ध्वाण्डच्छिद्रनिःसृतबाहिर्जलरूपा प्रतिपादिता । वामनपुराणे तु—

'विष्ण्वङ्घ्रिणा प्रसरता कटाहे भेदितेऽम्बरात्। अम्बराद्विष्णुपादान्तात्पपात कुटिला ततः॥ तस्माद्विष्णुपदीत्येवं नाम्ना ख्यातिरभून्मुने॥' इति। तत्रोर्ध्वाण्डकपालपर्यन्तप्रसरद्विष्णुपादाग्रनिर्भिन्नाकुलीभूतब्रह्मलोकप्रवहत्कुटिलाजलरूपोक्ता सर्वोपसंहारेण त्रिविधजलरूपैषा पर्यवस्यति। सा च विष्णुपदान्निर्गतैव मेरोरुपरि निपत्य तदैव सागरं प्राप्नेति प्रतिपादितं महाभारते सभापर्वणि— 'तच्छिद्रात्स्यन्दिता तत्र पादाङ्गुष्ठाथ निम्नगा। संसारसागरस्याशु पावनी सागरंगमा॥' इति। कूर्मपुराणे तु सा विष्णुपदी व्योमगङ्गा जातेत्युक्तम्— 'अथाण्डभेदादपतच्च शीतलं महाजलं तत्पुण्यकृद्भिश्च जुष्टम्। प्रवर्तते चापि सरिद्वरा तदा गङ्गेत्युक्ता ब्रह्मणा व्योमसंस्था॥' इति। देवानां विहारार्थं केनचिदंशेन व्योम्नि स्थिता, अवशिष्टा सागरे पतितेत्युभयानुरोधेन योज्यम्। एवं च या हैमवती गङ्गा सैव भगीरथानुग्रहार्थं शिवेन शिरसा धृता न विष्णुपदीति न बालिशानामत्र शङ्कावकाशः। ननु विष्णुपदी शिवेन शिरसा धृतेत्यपि पुराणान्तरवचनैरप्यवगम्यते। तथा हि विष्णुपुराणे 'ऊर्ध्वोत्तरमृषिभ्यस्तु ध्रुवो यत्र व्यवस्थितः। एतद्विष्णुपदं दिव्यं तृतीयं व्योम्नि भास्वरम्॥' इत्युपक्रम्योक्तम्— 'ततः प्रवहति ब्रह्मन्सर्वपापहरा सरित्। गङ्गा देवाङ्गनाङ्गानामनुले-

पनपिञ्जरा ॥ वामपादाम्बुजाङ्गुष्ठनखात्स्रोतोविनिर्गता । विष्णोर्बिभर्ति यां भक्त्या शिरसाऽहर्निशं मृडः ॥ ततः सप्तर्षयो यस्यां प्राणायामपरायणाः । तिष्ठन्ती वीचिमालाभिरुह्यमाना जटाजले ॥ वार्योघैः संततैर्यस्याः प्लावितं शशिमण्डलम् । भूयोऽधिकतरां कान्तिं वहत्येतदनुक्षपम् ॥ मेरुपृष्ठे पतित्वोच्चैर्निष्क्रान्ता शशिमण्डलात् । जगतः पावनार्थाय या प्रयाति चतुर्दिशम् ॥ सीता चालकनन्दा च चक्षुर्भद्रा च संस्थिता । एकैव या चतुर्भेदा दिग्भेदगतिलक्षणा ॥ भेदं चालकनन्दाख्यं यस्याः शर्वोऽपि दक्षिणः । दधार शिरसा प्रीत्या वर्षाणामधिकं शतम् ॥ शंभोर्जटाकलापाच्च विनिष्क्रान्तातिदुष्करा । प्लावयित्वा दिवं निन्ये या पापान्सगरात्मजान् ॥' इति । मार्कण्डेयपुराणेऽपि— 'ध्रुवाधारं जगद्योनेः पदं नारायणस्य यत् । ततः प्रवृत्ता या देवी गङ्गा त्रिपथगामिनी ॥ सा प्रविश्य सुधायोनिं सोममाधारमम्भसाम् । संवर्तमानार्करश्मिसंततिं लोकपावनी । पपात मेरुपृष्ठे च सा चतुर्धा ततो ययौ ॥' इत्युपक्रम्य सीतायाः पूर्वसमुद्रप्राप्तिमुक्त्वा 'तथैवालकनन्दाख्या दक्षिणा गन्धमादने । मेरुपार्श्ववनं गत्वा नन्दनं देवनन्दनम् ॥ मानसं च महावेगा प्लावयित्वा सरोवरम् । मानसाच्छैलराजानं रम्यादिशिखरं गता ॥ तस्माच्च पर्वतात्सर्वान्दक्षिणा ये क्रमोदिताः । तान्प्ला-

वयित्वा संप्राप्ता हिमवन्तं महागिरिम् ॥ दधार तत्र तां शंभुर्मुमोच वृषभध्वजः । भगीरथेनोपवासैः स्तुत्या चाराधितो विभुः ॥ तत्र मुक्ता च शर्वेण सप्तधा लवणोदधिम् । प्रविवेश त्रिधा प्राच्यां सा तदा तु महानदी ॥ भगीरथस्यानुरथं स्रोतसैकेन दक्षिणा ॥' इति । स्कान्दे केदारखण्डे—'संकल्पेनैव ववृधे वामनो भगवानजः । पदैकेन मही व्याप्ता विष्णुना प्रभविष्णुना ॥ सर्वे स्वर्गा द्वितीयेन व्याप्तास्तेन महात्मना । सत्यलोकस्थितेनैव ब्रह्मणा परमेष्ठिना ॥ कमण्डलुगतेनैव ह्यम्भसा चावनेजने ॥ तत्पादसंपर्कजलाच्च जाता पापापहा मङ्गलमङ्गला च । यया त्रिलोकी च कृता पवित्रा यया च सर्वे सगराः समुद्धृताः ॥ यया कपर्दः परिपूरितश्च शंभोस्तदानीं च भगीरथेन ॥' इति । महाभारते— 'विष्णोः पादाच्छिशुमाराद्ध्रुवाच्च सोमात्सूर्यान्मेरुरूपाच्च विष्णोः । समागता शिवमूर्ध्नी हिमाद्रिम् ॥' इति । उच्यते— वामनपुराणरामायणस्वारस्यानुरोधेन च ब्रह्मलोकस्थिता हैमवती गङ्गा भगीरथेन नीता तदनुग्रहार्थं शिवेन धृता च । विष्णुपदान्निर्गताया हैमवतीजलेनापि मिश्रणमासीदित्येतावदवलम्ब्य तदभेदोपचारेण विष्णुपदी शिवेन धृता सागरानपि पावितवतीति विष्णुपुराणादिवचनान्युदाहृतानि योजनीयानि । कथमन्यथा त्रिविक्रमावतारकाल एव मेरौ

निपत्य भुवि प्रवहन्त्यां विष्णुपद्यां सत्यां भगीरथेन विदि-वाद्गङ्गानयनं कृतमिति विष्णुपुराण एवोक्तं संघटेत? ननु त्रिविक्रमावतारकाले निर्गता विष्णुपदी ध्रुवलोक एव स्थिता ; सा भगीरथेन प्रसादिता मेरौ निपत्य दक्षिणस्यां दिशि प्रवहन्ती शिवेन शिरसा धृता हिमवन्तं प्राप्य सप्तधा प्रसृतेति कल्पयिष्यते ; रामायणे तु किंचिदंशं परित्यज्य कथा वर्णिता ; तस्मात् ' इयमाकाशगा गङ्गा ' इति ब्रह्मसेवार्थं ब्रह्मलोकमागता विष्णुपदी ब्रह्मणा ' इयम् ' इति निर्दिष्टेति च कल्पयिष्यत इति चेत् , मैवम् । ' तच्छिद्रात्स्यन्दिता ' इत्युदाहृतभारतश्लोके विष्णुपदान्निर्गमनानन्तरमेव विष्णुपद्याः शीघ्रं सागरप्रवेशस्योक्तत्वेन भगीरथकालपर्यन्तं ध्रुवलोके तदवस्थानानुपपत्तेः । न च तदा केनचिदंशेन भुवि पतिता सा तदानीमेव सागरमपि प्रविष्टा, न भूलोके प्रवहन्ती स्थिता, अतो भगीरथकृतं तस्याः विविष्टपादानयनं संघटत इति वाच्यम् । भगीरथार्थमवतरन्त्यास्तस्या मेरौ पतने तत्र निपत्य स्वत एव दिक्षु प्रवहन्त्याः पतनवेगवारणार्थं शिवप्र-सादनस्याकर्तव्यत्वेन तदुक्त्यसंघटनाच्छिवमूर्धन्येव पतने मेरौ निपत्य दक्षिणस्यां दिशि प्रवहन्ती विष्णुपदी शिवेन धृतेति विष्णुपुराणादिसंघटनाभावाच्च । अस्मिन्पक्षे मेरौ न निपतनोक्तिस्त्रिविक्रमावतारकालवृत्तान्तविषया वाच्या । तदा

मेरौ निपतिता ततः प्रभृत्यद्यपर्यन्तं भुवि प्रवहन्त्येव वर्तमानां 'जगतः पावनार्थाय सा प्रयाति चतुर्दिशम्' इत्युदाहृतविष्णुपुराणवचसावगतेति तस्यामिह सत्यामत्र त्रिदिवात्तदानयनार्थं भगीरथकृतयत्नस्यासंघटनाच्च । तस्मात्तत्संघटनार्थम् 'इयमाकाशगा गङ्गा' इत्यादिरामायणवचने स्वारस्यलाभार्थं च ब्रह्मलोकस्थिता हैमवती भगीरथेन तपोभिरानीता शिवेन च धृता सागरानपि प्लावितवतीति तदभेदोपचारेण तद्वृत्तान्तस्यैव तस्यां विष्णुपुराणादिषु वर्णनमित्येव कल्पनं युक्तम् । ध्रुवलोकाद्भगीरथेन विष्णुपद्यानीतेति कल्पनेऽपि त्रिविक्रमावतारकालमारभ्य मेरौ निपत्य भुवि प्रवहन्त्यां शिवधृतत्वादितद्वृत्तान्तवर्णनस्य तदभेदोपचारमूलकत्वकल्पनावश्यंभावादित्यलं प्रपञ्चेन ॥ ३६ ॥

नन्वस्त्वेवमेतत् ; तथापि विष्णुपदीनिर्गमनसमये तन्मार्गे स्थिता हैमवती तया मिश्रिताभूत् ; अतः पावनीति सा शिवेन मूर्ध्ना धृतेति शङ्कां हैमवत्याः शिवमूर्धसंबन्धादेव पावनत्वप्रतिपादनेन निरस्यति—

सापि त्वदङ्गपतिता नितरां पवित्रा
जाता ततस्त्वदभिषेकजलोपमेति ।


KOVILOOR MADALAYAM

स्वर्लोकवासिभिरनन्तरमादृतासी-
द्ये मूर्धभिर्दधति ते चरणावसृष्टम् ॥ ३७ ॥

रामायणे विश्वामित्रवचनम्— 'आकाशादपतद्राम शिवे शिवशिरस्युत । अचिन्तयच्च सा देवी गङ्गा परमदुर्धरा । विशाम्यहं हि पातालं स्रोतसा गृह्य शंकरम् ॥ तस्यावलेपनं ज्ञात्वा क्रुद्धः स भगवान्हरः । तिरोभावयितुं बुद्धिं चक्रे त्रिनयनस्तदा ॥ सा तस्मिन्पतिता पुण्या पुण्ये रुद्रस्य मूर्धनि । हिमवत्प्रतिमे राम जटामण्डलगह्वरे ॥' इत्याद्युक्त्वा, 'तत्र देवर्षिगन्धर्वा वसुधातलवासिनः । भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः ॥ शापात्प्रपतिता ये च गगनाद्वसुधातलम् । कृत्वा तत्राभिषेकं ते बभूवुर्गतकल्मषाः ॥ धूतपापाः पुनस्तेन तोयेनाथ सुभास्वता । पुनराकाशमाविश्य स्वाँल्लोकान्प्रतिपेदिरे ॥' इत्युक्तम् । तत्र हि 'शिवे शिवशिरस्युत' इति 'पुण्ये रुद्रस्य मूर्धनि' इति च शिवपुण्यशब्दाभ्यां शिवमौलेः परममङ्गलत्वं परमपवित्रत्वं चोक्त्वा तत्संबन्धादेव गङ्गायाः पावित्र्यातिशयः 'भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः । शापात्प्रपतिता ये च' इति च स्पष्टमेवोक्तः । अयमेवार्थः कूर्मपुराणेऽपि बहुविधगङ्गामाहात्म्यप्रतिपादनानन्तरं संक्षेपेण कथितः— 'पवित्राणां पवित्रं च मङ्गलानां

च मङ्गलम् । महेश्वरात्परिभ्रष्टा सर्वपापहरा शुभा ॥' इति । 'ये मूर्धभिर्दधति ते चरणावसृष्टम्' इत्यनेन भागवतोक्तः कश्चिदर्थः स्मारितः । तत्र हि 'शिवापदेशोऽप्यशिवो मत्तोन्मत्तजनप्रियः' इत्यादिपरुषोक्त्या शिवं दूषितवन्तं दक्षं प्रति दाक्षायण्याः सोल्लुण्ठनमिदं वचनम्— 'किं वा शिवाख्यमशिवं न विदुस्त्वदन्ये ब्रह्मादयस्तमवकीर्य जटाः श्मशाने । तन्माल्यभस्मनृकपालवसत्पिशाचैर्ये मूर्धभिर्दधति तच्चरणावसृष्टम् ॥' इति । शिवः श्मशानवासी भूत्वा तत्र विप्रकीर्णमाल्यभस्मनृकपालादीनि धृत्वा पिशाचैः सह स्थितो नाममात्रेण शिवश्चारित्रेण त्वशिव इत्येतत्त्वमेक एव जानासि ब्रह्मादयो न जानन्ति किम्, ये ब्रह्मादयः शिवचरणनिर्गतं तल्लग्नधूल्यादिकमपि परमं मङ्गलं परमं पवित्रमिति शिरोभिर्वहन्तीति श्लोकार्थः । एतेन हि भागवत एव शिवचरणसंलग्नधूल्यादीनामपि परमपावित्र्यवचनेन तन्मूर्धस्ततोऽप्यधिकं पावित्र्यं सूचितम् । अतो रामायणाद्युक्ते तन्मूर्धसंसर्गादेव गङ्गायाः परमपावित्र्येऽभिमतेऽपि प्रधानप्रतिपाद्यभगवन्महिमस्तुत्यर्थम् 'यच्छौचनिःसृत—' इत्यादि यत्किंचित्तत्रोक्तमिति न तत्रादरो मनीषिभिः कार्यः । भागवतेऽपि प्रश्नभक्त्यनुसारेण कृष्णावतारमाहिमानमेव प्राधान्येन प्रख्यापनीयं मनसि निधायावतारानुक्रमेण

'एते स्वांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम्' इति रघुनाथाद्यवताराणां भगवदंशलेशत्वमुक्त्वा कृष्णस्य परिपूर्णतदवतारत्वमुक्तम् । तदुपबर्हात्मकं किं च भारतविष्णुपुराणादिवचनविरुद्धं ब्राह्मणपुत्रानयनप्रस्तावगतभागवतविरुद्धं च तत्प्रशिशंसिषितकृष्णावतारस्तुत्यर्थत्वेन कथंचिन्नेतव्यम् । एवमिदमपि भागवत एव तत्तत्प्रदेशपर्यालोचनया शिवस्य विष्णोश्च धर्मिग्राहकमानसिद्धः परापरभावः । तथा हि भागवतोपक्रमे— 'तस्मादेकेन मनसा भगवान्सात्वतां पतिः । श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च नित्यदा ॥' इत्यादिकमुक्त्वा कोऽसौ भगवानित्याकाङ्क्षायाम्, 'सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते । स्थित्यादयो हरिविरिञ्चिहरेति संज्ञाः श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः ॥' इति श्लोकेन त्रिमूर्त्यन्तर्गतविष्णुमेव श्रेयस्करत्ववादेन प्रागुपक्षिप्तनियतभजनीयत्वोपपादनपूर्वकं भगवन्तं विधाय 'भेजिरे मुनयोऽथाग्रे भगवन्तमधोक्षजम् । सत्त्वं विशुद्धं क्षेमाय कल्पते नेतराविह ॥' इति सात्त्विकत्वेनैव तस्य पूर्वैरप्युपासितत्वमुक्त्वा तस्यैव विविधप्रशंसापूर्वकम् 'जगृहे पौरुषं रूपं भगवान्महदादिभिः । संभूतं षोडशकलमादौ लोकसिसृक्षया ॥ यस्याम्भसि शयानस्य योगनिद्रां वितन्वतः । नाभीह्रदाम्बुजादासीद्ब्रह्मा विश्वसृजां पतिः ॥

यस्यावयवसंस्थानैः कल्पितो लोकविस्तरः । तद्वै भगवतो रूपं विशुद्धं सत्त्वमूर्जितम् ॥' इति सत्त्वप्रधानरूपमुक्त्वा 'एतन्नानावताराणां निदानं बीजमव्ययम् । यस्यांशांशेन सृज्यन्ते देवतिर्यङ्नरादयः ॥' इति । तदेवंरूपं वैष्णवं मूलरूपमित्युक्तम् । अनेन त्रिमूर्त्यन्तर्गतो विष्णुरेव तत्परं विष्णुतत्त्वम् । स एव च भागवते वैष्णवपुराणैः प्राधान्येन प्रतिपाद्यत इति स्पष्टीकृतम् । एवं च सत्त्वाद्येकैकगुणप्राधान्यराहित्येन निरस्तसात्त्विकादिभेदं मायोपहितं तेषां समष्टिरूपं सगुणं ब्रह्म यस्यांशभूता इमे स्मृताः । मैत्रेयोपनिषदि 'यो ह खलु वा वास्य राजसोंशोऽसौ स योऽयं ब्रह्मा, अथ यो ह खलु वा वास्य तामसोंशोऽसौ स योऽयं रुद्रः, अथ यो ह खलु वा वास्य सात्त्विकोंशोऽसौ स योऽयं विष्णुः' इति । तस्मादवरं विष्णुतत्त्वमित्यङ्गीकृतं भवति । अत एव यस्य प्रपञ्चनार्थं भागवतं तस्मिन्विष्णुपुराणे पुराणप्रतिपाद्यस्य विष्णुतत्त्वस्य परब्रह्मावरत्वमुक्तम् । तत्र हि 'ब्रह्मविष्णुशिवा ब्रह्मन्प्रधानब्रह्मशक्तयः । ततश्च देवा मैत्रेय न्यूना दक्षादयस्ततः ॥' इत्यादिना ब्रह्मादिस्थावरान्तस्य कृत्स्नस्य प्राणिजातस्योत्कर्षापकर्षोपन्नपरब्रह्मशक्तिविशेषत्वमुक्त्वा तदनन्तरम् 'स वरः सर्वशक्तीनां ब्रह्मणः समनन्तरः' इति पुराणप्रतिपाद्यस्य विष्णोः

सकलब्रह्मशक्त्युत्कृष्टत्वमभ्युपेत्यापि ब्रह्मावरत्वमुक्तम् । एवं त्रयाणां ब्रह्मशक्तित्वोक्त्या विष्णोर्ब्रह्मावरत्वोक्त्या च यत्त्रिमूर्त्युत्तीर्णं ब्रह्मास्तीति सूचितं तत्तु शिव एवेति विष्णुपुराणस्याप्याकूतम् 'शक्तयो ब्रह्मविष्ण्वीशा भुक्तिमुक्तिफलप्रदाः । सर्वेश्वराः सर्ववन्द्याः शाश्वतानन्दभोगिनः ॥ अन्याश्च शक्तयो दिव्याः सन्ति तत्र सहस्रशः । इज्यन्ते विविधैर्यज्ञैः शक्रादित्यादयोऽमराः ॥ सर्वासामेव शक्तीनां ब्रह्मविष्णुशिवात्मिकाः । प्रधानाः संस्मृता देवाः शक्तयः परमात्मनः ॥ आभ्यः परस्ताद्भगवान्परमात्मा सनातनः । गीयते सर्वशक्त्यात्मा शूलपाणिर्महेश्वरः ॥' इति कूर्मपुराणवचनैकार्थ्यादवगम्यते । विष्णुभक्त्युत्कर्षप्रसिद्ध्यर्थं प्रवृत्ते तत्र तत्र स्फुटीकृतम् । अत एवामृतमथनभगीरथचरितादिप्रस्तावेष्वनन्यसाध्यमिति शिवेन कृतं कालकूटग्रसनं गङ्गाधारणमित्याद्यपि तत्रत्यमुक्तम् । शिवस्य त्रिमूर्त्युत्तीर्णसात्त्विकादिभेदरहितमायोपहितपरब्रह्मरूपत्वं भागवतेऽपि तत्र तत्र व्यवहृतम् । यथाष्टमस्कन्धे— 'न ते गिरित्र—' इति प्रागुदाहृतश्लोके । एवं च 'गुणमय्या स्वशक्त्यास्य सर्गस्थित्यादिकं प्रभो । धत्से यथा स्वदृग्भूमन्ब्रह्मविष्णुशिवाभिधाम् ॥ त्वं ब्रह्म परमं गुह्यं सदसद्भावभावनम् । नानाशक्तिभिराभासि त्वमात्मा जगदीश्वरः ॥' इत्यादीनि भागवतवचनानि यद्यपि

शिवविभूतिभूतनीललोहितरुद्राद्युद्देशेन प्रवृत्तानि स्युः, तथापि प्रत्यासत्त्यतिशयेन शिवाभेददृष्ट्या प्रवृत्तानीत्यत्र योजनीयम् । एवमेव विष्णौ दृष्टान्यप्येतादृशानि वचनानि योजनीयानि, शिवस्य त्रिमूर्त्युत्तीर्णस्य भारते शिवपुराणादिषु चैककण्ठ्येन सुप्रसिद्धत्वात्, पराशरपुराणे सर्वेषां पुराणानां यथायोगं साक्षात्परम्परया च शिवपर्यवसानप्रतिज्ञानं कृत्वा शैवपुराणानां साक्षाच्छिवप्रतिपादकत्वं संहाररुद्रवर्णनद्वारा शिवपर्यवसानं चोक्त्वा 'वैष्णवानि पुराणानि समस्तानि महामुने । त्रिमूर्तीनां हरेर्नाम्ना मूर्त्या तस्य परं पदम् । प्रवदन्ति पुरा देव ब्राह्मे चैवानया दिशा ॥' इत्युक्तत्वाच्च वैष्णवानां त्रिमूर्त्युत्तीर्णपरब्रह्मास्तित्वाभ्युपगमे, अथर्वशिरोऽथर्वशिखाकैवल्योपनिषदादिश्रुतितदुपबृंहणपुराणवचननिचयानुसारेण तत्सगुणं ब्रह्म शिव एव पर्यवस्येदिति भिया त्रिमूर्त्यन्तर्गतः सात्त्विको विष्णुरेव परं ब्रह्म, त्रिमूर्त्युत्तीर्णं परं ब्रह्म नास्तीति तत्प्रतिपादकश्रुतिपुराणान्यथानयनस्य 'एकं त्रेधा विभक्तं त्रितयसमधिकं तत्त्वमीशास्त्रयस्ते विष्ण्वन्या मूर्तिरिष्टे प्रभवति नियमः कल्पभेदात्त्रयाणम् । इन्द्रादीनां दिवि स्यान्निजसुकृतवशादीश्वराणां प्रवाहः स्यादेकस्येश्वरत्वं प्रतिफलनमिवेत्यादि चैवं परास्तम् ॥' इति तदीयसंग्रहश्लोकस्य च दर्शनाच्च । एवं च भारतविष्णुपुराणयोर्धर्मिग्राहकमानासिद्धस्य

परभावस्य व्यत्ययेन कल्पनायोगात्तद्विरुद्धं सर्वं प्रशंसार्थत्वेन नेयम् । एवं पुराणान्तरेष्वपि । किं च त्रिविक्रमरूपमदित्यामाविर्भूतेन येन भगवता दर्शितं स विष्णुर्द्वादशादित्यमध्ये सर्वेष्वपि पुराणेतिहासेष्वविभागेन परिगणितः । तेषां च द्वादशानां सूर्यकलावेशेन स्वस्वमासाधिकारनिर्वोढृत्वं कूर्मपुराणे वर्णितम्— 'सर्वात्मा सर्वलोकेशो महादेवः प्रजापतिः । सूर्य एव त्रिलोकस्य मूलं परमदैवतम् । द्वादशान्ये तथादित्या देवास्ते ह्यधिकारिणः ॥ वरुणो माघमासे तु सूर्यः पूषा तु फाल्गुने । चैत्रे मासि तु वेदाङ्गो धाता वैशाखतापनः ॥ ज्येष्ठे चैव च देवेन्द्र आषाढे सविता रविः । विवस्वाञ्श्रावणे मासि प्रोष्ठपद्यां भगः स्मृतः ॥ पर्जन्योऽऽश्वयुजे त्वष्टा कार्त्तिके मासि भास्करः । मार्गशीर्षे भवेन्मित्रः पौषे विष्णुः सनातनः ॥' इति । तत्र मासाधिकारिषु सूर्येषु जीवरूपप्रधानसूर्यांशावेशो न विवक्षितः, विष्णोस्तदंशावेशेन कार्यकर्तृत्वोक्त्ययोगात् । किं तु तदन्तर्यामिशिवरूपसूर्यांशावेशः । अत एव 'महादेवः प्रजापतिः' इत्युपक्रान्तम्, 'एष देवो महादेवो भास्वान्साक्षान्महेश्वरः । भासते वेदविदुषां नीलग्रीवः सनातनः ॥' इत्युपसंहृतम् । प्रदेशान्तरेषु च 'एष रुद्रो महादेवः कपर्दी च घृणी हरिः । आदित्यो भगवान्सूर्यो नीलग्रीवस्त्रिलोचनः ॥ आधीयते सह-

स्रांशुः सामगाध्वर्युहोतृभिः ॥' इत्यादि वर्णितम् । तत्र सूर्यो-पस्थानार्थमुपदिष्टे सूर्यहृदयस्तोत्रे मूलश्रुत्यनुसारेण शिवरूपत-यैव सूर्यस्तुतिः कृता— 'भूर्भुवःसुव ओंकारः सर्वो रुद्रः सनातनः । पुरुषः सन्मोहितस्त्वां प्रणमामि कपर्दिनम् ॥ त्वमेव विश्वं बहुधा जातं यज्जायते च यत् । नमाम्यजाय रुद्राय त्वामहं शरणं गतः ॥ प्रचेतसे नमस्तुभ्यं नमो मीढु-ष्टमाय ते । नमो नमस्ते सूर्याय त्वामहं शरणं गतः ॥ हिर-ण्यबाहवे तुभ्यं हिरण्यपतये नमः । अम्बिकापतये तुभ्यमु-मायाः पतये नमः ॥ नमोऽस्तु नीलग्रीवाय नमस्तुभ्यं पिना-किने । विलोहिताय भर्गाय सहस्राक्षाय ते नमः ॥ नम-स्यामि परं ज्योतिर्ब्रह्माणं त्वां परामृतम् । विश्वं पशुपतिं भीमं नरनारीशरीरिणम् ॥' इति । यत्तु विष्णुपुराण आदि-त्यऋषिगन्धर्वाप्सरःप्रभृतीन्सप्तविधान्मासाधिकारिणः 'मैत्रे-य स्यन्दने भानोः सप्त मासाधिकारिणः' इत्युपक्रम्य 'मासे-ष्वेतेषु मैत्रेय वसन्त्येते तु सप्तकाः । सवितुर्मण्डले ब्रह्मन्वि-ष्णुशक्त्युपबृंहिताः ॥' इत्युक्तम् । तत्तेषु विष्ण्वंशावेशाभिप्रायं न भवति । किं तु 'आदित्यो वा एष एतन्मण्डलं तपति' इत्यादिश्रुतौ मण्डलपुरुषत्वरूपतया 'ऋग्भिः पूर्वाह्णे दिवि देव ईयते' इत्यादिमन्त्रे पूर्वाह्णादितपनहेतुतया च या वेदत्रयी वर्णिता तत्कृतसाहाय्यकाभिप्रायम् । 'स च

विष्णुः स्थितः स्थित्यां जगतः पालनोद्यतः । ऋग्यजुःसाम-भूतोऽन्तः सवितुर्द्विज तिष्ठति ॥ मासि मासि रविर्यो यस्तत्र तत्र हि सा परा । त्रयीमयी विष्णुशक्तिरवस्थानं करोति वै ॥' इति तत्रैवाग्रे विवरणात् । इदं तु 'य एषोऽन्तरा-दित्ये हिरण्मयः पुरुषः' इत्युपक्रम्य 'नमो हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतये नमो नमः' इत्यन्तया तैत्तिरीयोपनिषदा 'असौ यस्ताम्रो अरुणः' इत्या-दिश्रुतिगणैस्तदनुसारिभिरुपबृंहणैश्च सिद्धम् । शिवस्य सूर्या-न्तर्यामितया मासाधिकारिष्वावेशं न निरोद्धुमीष्टे । अतो यदावेशाद्यस्य स्वयं कार्यकरणसामर्थ्यमवगतं तस्य तदपे-क्षयोत्कर्षो न संगच्छते । अतस्तद्विरुद्धं सर्वं तत्प्रशंसार्थतया यथा कथंचिन्नेयमिति सिद्धम् ॥ ३७ ॥

अथ शिवस्य बाणासुराहवे पराजयं जल्पतः प्रतिबोध-यति—

उज्जृम्भणे यदुकुलाधिपतेरुदास्था
बालेन्दुशेखर पुरा किल बाणयुद्धे ।
एतावता विकलतां तव विक्रमस्य
लोके खलाः कतिचिदीश्वर कल्पयन्ति ॥

कृष्णस्योज्जृम्भणे शिवस्यौदासीन्यमात्रम , न तु पराजय इत्येतत्कुतोऽवगम्यत इत्याकाङ्क्षायामर्थापत्तेरित्याह—

ओजीयसामसि वरः स्थिरकार्मुकोऽसि
भीमोऽसि सर्वजगतामखिलेश्वरोऽसि ।
इत्थं त्वयि श्रुतिशतैः परिगीयमाणे
किं नाम जल्पति जनः शिव किंपचानः ॥३९॥

कल्पान्तरद्रुहिणकोटिकरोटिमाला-
भस्माङ्गरागकमठाङ्गवराहशृङ्गैः ।
आकल्प एव तव मङ्गलविग्रहस्य
सर्वोत्तरं तव बलं किमु न व्यनक्ति ॥ ४० ॥

यस्यांशकैः शरभभैरववीरभद्रै-
रामर्दिता हरिविरिञ्चपुरंदराद्याः ।
विश्वेश तस्य तव विक्रमभूरिभावे
साक्ष्यं त एव समुपाददते किमन्यैः ॥ ४१ ॥

कल्पद्रुमाहरणषट्पुरशासनादि
यत्तत्तथैव यदुराडतनिष्ट शक्त्या ।
तस्मिञ्शिव प्रतिहतिं तव पौरुषस्य
मूर्खोदितां बत स एव कथं सहेत ॥ ४२ ॥

'न वा ओजीयो रुद्र त्वदस्ति' इति सर्वस्मादप्योजीयस्त्वं शिवस्य श्रुतम् । 'नमो रुद्राय स्थिरधन्वने' इति स्थिरधनुष्ट्वमपि श्रुतम् । 'नम उग्राय च भीमाय च' इत्यादौ निरुपपदभीमनाम्ना सकलजगद्भयंकरत्वं श्रुतम् । तत्सर्वतो बलवत्त्वमन्तरेण न संभवति । तथा 'सर्वैश्वर्यसंपन्नः सर्वेश्वरः' इत्यादौ श्रुतं सर्वनियन्तृत्वमपि तदन्तरेण न संभवति । किं चातीतानन्तकल्पेषु पितामहानुपसंहृत्य तदीयकपालमालाधारणं तद्भस्मानुलेपनं कूर्मावतारमुपसंहृत्य तदस्थिधारणं वराहावतारमुपसंहृत्य तदीयशृङ्गधारणं च ततस्ततो बलवत्त्वमन्तरेण न संभवति । अपि च शिवकलाविर्भाववत्तया शिवांशभूतैः शरभभैरववीरभद्रैर्नृसिंहावतारोपसंहारः पितामहपञ्चमशिरश्छेदो दक्षाध्वरे पुरंदरादिसकलदेवावलेपध्वंसश्च कृतः । सर्वमेतत्कैमुतिकन्यायेन शिवस्य सर्वतो बलवत्तरत्वमतितरां स्पष्टीकरोत्येव । अपि च शिवमाराध्य तत्प्रसादत एव कृष्णेन पारिजाताहरणसामर्थ्यं लब्धमिति षट्पुरवधे निकुम्भयुद्धे प्रच्छन्नतया युध्यमानं निकुम्भं दृष्ट्वा प्रतियोद्धुमशक्नुवता कृष्णेन स्वप्रतिष्ठितस्य बिल्वोदकेश्वरनाम्नः शिवस्य ध्यानादेव मायाविनं निकुम्भं दृष्ट्वा प्रतियुद्धं कृतमित्यादि हरिवंशे प्रपञ्चितम् । अतः शिवस्य पराजयवचनमत्यन्तापहास्यमेव । अत्र लेखनीयान्युपाख्यानानि विस्तरभयान्न लिखितानि,

शिवपुराणादिषु प्रसिद्धानि द्रष्टव्यानि ॥ ३९—४२ ॥

आस्तामियमर्थापत्तिकथा ; युद्धार्थमागत्य तदौदासीन्याव-लम्बने को हेतुरित्याकाङ्क्षायां तत्र हेतूनाह—

शप्तस्त्वया शतमखस्य रिपुः स युद्ध-
मभ्यर्थयन्नसुरभावविलोपनाय ।
मत्तुल्य एव समरे मदमस्य दोष्णां
कण्डूभरोत्थमचिरादपनेष्यतीति ॥ ४३ ॥

देव्या च देव वचनं तव निर्वहन्त्या
संपादिता समरसंपदुषानिदाना ।
यत्र त्वया हरिमुखेण भुजावलेपा-
त्प्रच्याव्य सैष निहितः प्रमथाधिपत्ये ॥

शैली च ते समुदिता शशिखण्डचूड
भक्ते विभावयासि यद्भवतोऽधिकत्वम् ।
आदाय चक्रमभिदिव्यनदीतनूजं
यामेव सोऽप्यनुससार यदुप्रवीरः ॥ ४५ ॥

दत्तं च शौर्यमधिकं भवतैव तस्मै
तच्चेन्महेश कलयापि न पालयेथाः ।

आशङ्क्य वाक्यमखिलं भवतो मृषेति
वेदागमेष्वपि जना विमुखा भवेयुः ॥ ४६ ॥

एतैस्त्वया गिरिश हेतुभिरेव तस्मि-
न्नाविष्कृतं किमपि तत्सहजं न तेजः ।
कामान्धकत्रिपुरवासिजलंधराद्यै-
र्यस्मिन्दरप्रकटिते शलभत्वमाप्तम् ॥ ४७ ॥

हरिवंशे तावद्दोःसहस्रकण्डूभरेण युद्धमतितरामभ्यर्थयमानो ऽत्यन्तदृप्तो बाणः शिवेन वरदानव्याजेन तद्दर्पशान्त्यर्थं शप्त इति सूचितम्--'ततः प्रहस्य भगवानब्रवीद्वृषभध्वजः । भविता बाण युद्धं ते यदा तच्छृणु दानव ॥ ध्वजस्यास्य यदा भङ्गस्तव तात भविष्यति । स्वस्थाने स्थापितस्याथ तदा युद्धं भविष्यति ॥' इति । अत्र 'प्रहस्य' इत्यनेन युद्धप्रार्थनस्यापहसितत्वोक्त्या स्वगृहस्थापितमयूरध्वजपतनरूपदुर्निमित्तोद्गमनानन्तरं युद्धं भविष्यतीत्युक्त्या च भाविनि युद्धे तस्यावश्यं पराजयो भविष्यतीति सूचितम् । भागवते त्वयमर्थः स्पष्टमेवोक्तः—'बाणः पुत्रशतज्येष्ठो बलेरासीन्महात्मनः । सहस्रबाहुर्वाद्येन ताण्डवेऽतोषयन्मृडम् ॥ भगवान्सर्वभूतेशः शरण्यो भक्तवत्सलः । वरेण च्छन्दयामास वरं वव्रे सुराधिपः ॥ स एकदाह गिरिशं पार्श्व-

स्थं प्रेक्ष्य दुर्मदः । किरीटेनार्कवर्णेन संस्पृशंस्तत्पदाम्बुजम् ॥ नमस्ये त्वां महादेवं लोकानां गुरुमीश्वरम् । पुंसामपूर्णकामानां कामरूपामराङ्घ्रिपम् ॥ दोःसहस्रं त्वया दत्तं परं भाराय मेऽभवत् । त्रिलोक्यां प्रतियोद्धारं न लभे त्वदृते समम् ॥ कण्डूत्या निभृतैर्दोर्भिर्युयुत्सुर्दिग्गजानहम् । अभ्ययां चूर्णयन्नद्रीन्भीतास्तेऽपि प्रदुद्रुवुः ॥ तच्छ्रुत्वा भगवान्क्रुद्धः केतुस्ते भज्यते यदा । त्वद्दर्पघ्नं भवेन्मूढ संयुगं मत्समेन ते ॥' इति । विष्णुपुराणेऽपि— 'बाणोऽपि प्रणिपत्याग्रे मैत्रेयाह त्रिलोचनम् । देव बाहुसहस्रेण निर्विण्णोऽस्म्याहवं विना ॥ कच्चिन्ममैषां बाहूनां साफल्यजनको रणः । भविष्यति विना युद्धं भाराय मम किं भुजैः ॥' इति पृष्टवन्तं बाणं प्रति शिववचनम्— 'मयूरध्वजभङ्गस्ते यदा बाण भविष्यति । पिशिताशजनानन्दं प्राप्स्यस्यत्यन्तदारुणम् ॥ ततः प्रणम्य मुदितः शंभुमभ्याययौ गृहान् । स भग्नं ध्वजमालोक्य हृष्टो हृष्टतरं ययौ ॥' इति । नन्वेवं सति 'क्रौर्यं किमप्यनुचिते विषये न दृष्टम्' इति पूर्वोक्तविरोधः; किं खल्वतोऽधिकं क्रौर्यं यद्बाणो नाम शप्यते? स ह्याजानसिद्धशिवभक्तिपरिपूर्णतपःप्रसादितेन शिवेन पुत्रत्वेन परिगृह्य स्कन्दानुजोऽयमिति देव्यै समर्पितः स्कन्देनाप्यनुजत्वेनोपलालित इति हरिवंश एवोक्तम्; ततश्च यदि नाम युद्धप्रार्थना-

ऽनुचिता कृता तदा 'मैवं वैरं वृथाः' इति बुद्ध्युपदेश एव युक्तः, न तु पुरतः प्रणम्य युद्धप्रार्थनासमये शापो दातुमुचितः; ततश्च विष्णुना स्वभक्तस्य प्रार्थितं ददतो बलेश्छद्मना बन्धनं यत्कृतं ततोऽस्य न कोऽपि विशेषः; तद्वदेव बलेश्च तत्कर्मानुसारिणा देवेनेत्थं कृतमित्येवायमपि परिहारो जात इत्याशङ्क्य ततो विशेषप्रदर्शनार्थं शापप्रयोजनमाह— असुरभावविलोपनायेति। अयमाशयः— येभ्यः शिवेन गाणापत्यमात्रं वा दत्तं न तेषां स्वस्वशौर्यादिना विस्मयः शिवस्य संनिधाववलेपवचनं वेति मर्यादा; अत एव सौप्तिके पर्वणि घोरान्शान्तान्नानाविधाकारानतिभीषणान्नानाविधायुधधरान्शिवपार्षदान्प्रस्तुत्योक्तम्— 'कामकारकराः सिद्धास्त्रैलोक्यस्येश्वरेश्वराः। नित्यानन्दाः प्रमुदिता वागीशा वीतमत्सराः॥ प्राप्याष्टगुणमैश्वर्यं ये च यान्ति न विस्मयम्। येषां विस्मयते नित्यं कर्मभिर्भगवान्भवः॥ मनोवाक्कायनिरतान्पाति पुत्रानिवौरसान्। श्रुतेन ब्रह्मचर्येण तपसा च दमेन च॥ ये समाराध्य शूलाङ्कं तत्सायुज्यं समागताः। यैरात्मभूतैर्भगवान्पार्वत्या सह शंकरः॥ सर्वभूतगुणैर्युक्तो भूतभव्यभवत्प्रभुः॥' इति, एवं च साक्षात्पुत्रः सन्नप्यनुचिते प्रवृत्तो बुद्ध्युपदेशं गृह्णातीति यदि निश्चयस्तदा तदुचितनिग्रहेणापि स ततो निवर्तनीय इति नीतिः। अयं च बाणः केवलं बुद्ध्युपदेशेन

न ततो निवर्तनार्ह इति शिवेन बाणवचनैरेवावगतम् । हरिवंशे हि— 'असकृन्निर्जिता देवाः सिद्धाः सह मरुद्गणाः । मया बलमदोत्सेकात्ससैन्येन तवाश्रयात् ॥ ते पराजयसंत्रस्ता निराशा मत्पराजये । नाकपृष्ठमुपागत्य निवसन्ति यथासुखम् ॥ सोऽहं निराशो युद्धस्य जीवितं नाद्य कामये । अयुध्यतो वृथा ह्येषा बाहूनां धारणा मम ॥ तद्ब्रूहि मम युद्धस्य कच्चिदागमनं भवेत् । न मे युद्धं विना देव रतिरस्ति प्रसीद मे ॥' इति । एवं च शिवाद्वराभासं शापं लब्ध्वा स्वपुरं प्राप्तः 'प्रियमावेदयिष्यामि मनसो भवतोऽनुगम' इति कुम्भाण्डं प्रत्युक्त्वा किं विष्णुना बद्धस्य बलेः पितुर्मोक्षोपायं पुनस्त्रैलोक्यराज्यप्राप्त्युपायं च शिवप्रसादाल्लब्धवानसीत्यादि तेन पृष्टश्चिरायुद्धापेक्षोऽहं भावि महद्युद्धं लब्धवानस्मीत्युक्त्वा तेन कुम्भाण्डेन मन्त्रिणा कीदृशो वरः प्रार्थित इति सनिर्वेदमुक्तस्तदानीमेव स्वगृहस्थापितमयूरध्वजपतनानन्तरमेव प्रवृत्तं रुधिरवर्षादिमहोत्पातजातं च दृष्ट्वापि भावियुद्धनिश्चयेन हृष्ट एव स्थित इति प्रपञ्चेनापि बुद्ध्युपदेशायोग्य इति व्यक्तीकृतम् । बाणश्च पुत्रत्वेन परिगृहीतो बाहुसहस्रमदोत्सेकमूलादसुरभावान्निवर्त्य पार्षदमर्यादायां स्थापनीयः । अतस्तदर्थं वरदानव्याजेन शापो दत्त इत्येवमौदासीन्ये शापस्तावदेको हेतुः । तदनुसारिभावि-

युद्धावश्यंभावनिदानं देवीवचनमपि तत्र हेत्वन्तरम् । एवं हि हरिवंश एव बाणशापानन्तरमुपाख्यायते— 'कदाचिदुमया सार्धं भगवानिन्दुभूषणः । विजहार नदीतीरे दिव्यकन्यादिसंवृतः ॥ तत्रोषा बाणदुहिता सेवमाना महेश्वरीम् । ममाप्येवं भवेद्भर्ता किमित्येवं व्यचिन्तयत् ॥ भावं तस्याः परिज्ञाय भवानी करुणानिधिः । ऊचे तवापि कल्याणि हृद्यो भर्ता भविष्यति ॥ वैशाखशुद्धद्वादश्यां यः स्वप्ने रंस्यते त्वया । स एव पश्चाद्भर्ता ते भविष्यत्यचिरादिति ॥ सा तथैव तिथौ तस्यां स्वप्ने दृष्ट्वा वधूर्वरम् । क्रीडन्तमात्मनोत्थाय बभूव विरहातुरा ॥ चित्रलेखा सखी तस्यास्तया स्वप्नो निवेदितः । यूनस्त्रिलोक्यां प्रथिताँल्लिखित्वा समदर्शयत् ॥ अनिरुद्धे तु लिखिते दृष्ट्वा बाणस्य कन्यका । अयमेव मया दृष्टो निशायामित्युवाच ताम् ॥ तदैव द्वारकां गत्वा साप्सरास्तत्र नारदात् । संप्राप्य तामसीं विद्यां तस्य प्रासादमाविशत् ॥ तत्रानिरुद्धं क्रीडन्तं मुदितं स्त्रीशतेन तम् । स्त्रियः सर्वा अपि तयैवाच्छादयत विद्यया ॥ तस्यामेव तिथौ स्वप्ने दृष्टवन्तमुषां च तम् । तस्यामासक्तहृदयं तद्वृत्तान्तं न्यवेदयत् ॥ ततस्तस्यानुमत्या सा तं गृहीत्वा क्षणेन च । आनीय बाणनगरं न्यवीविशदुषान्तिके ॥ उषातिमुदिता गुप्ता कन्यान्तःपुरवासिना । तेनैव रममाणा सा चिह्नैर्ज्ञाता

च राक्षिभिः ॥ ततः क्रुद्धेन बाणेन प्रेषितान्दैत्यसैनिकान् । तदायुधान्येवादाय प्रद्युम्नतनयोऽवधीत् ॥ ततो बाणः स्वयं कृत्वा युद्धमायां ततः श्रितः । बबन्ध नागपाशैस्तं वध्यं तत्र न्यवेदयत् ॥ नारदादिममाकर्ण्य वृत्तान्तं सहसा हरिः । बलप्रद्युम्नसहितो योद्धुं बाणपुरं ययौ ॥' इति । एषामुषामूलेऽत्र युद्धे देवीवचनसाफल्यार्थं नागपाशबन्धनानन्तरमनिरुद्धेन स्तुतायास्तत्र कृतसंनिधानायाः कराग्रस्फोटनेन वेदनापरिहाराय दृढं नागपाशबन्धं शिथिलीकृतवत्या दुर्गारूपायास्तस्या एव देव्याः 'सद्यः कृष्णः समागत्य बाणस्य भुजच्छेदनेन गर्वं परिहाप्य नागपाशान्दूरं पलायितान्कृत्वा त्वामपि द्वारकां नेष्यति' इत्यनुग्रहवचनसाफल्यार्थं च तस्मिन्युद्धे शिवेनौदासीन्यमवलम्बितमित्यपरो हेतुः । अपि च शिवस्य स्वस्मादपि स्वभक्तोत्कर्षप्रख्यापनस्वभावः कुबेरादिषु दृष्टः । 'भारतयुद्धमनायुध एव पाण्डवजयान्तं निर्वर्तयिष्यामि' इति निजप्रतिज्ञामपहाय 'त्वामायुधं ग्राहयिष्यामि' इति स्वभक्तस्य भीष्मस्य प्रतिज्ञां पालितवता कृष्णेनाप्यनुसृतः । स तत्र तृतीयो हेतुः । अपि च मैनाके पूर्वरूपेण शिवं तपसा प्रसादितवते कृष्णायेतरदुर्लभानेकवरप्रदानानन्तरमपि 'कदाचित्समरं प्राप्य भविष्यसि ममाधिकः' इत्युक्तं वरान्तरं द्रोणपर्वणि प्रतिपादितम् । हरिवंशे पारिजाताहरणसा-

मर्थ्यैलाभार्थं शिवं प्रसादितवन्तं कृष्णं प्रति— 'पुरा मैनाकमाश्रित्य तपस्त्वमकरोर्यदा । तदा मम वचः कृष्ण संस्मृत्य स्थैर्यमाप्नुहि ॥ अवध्यस्त्वमजय्यश्च मत्तः शूरतरस्तथा । भवितासीत्यवोचं यत्तत्तथैव न चान्यथा ॥' इत्यादिवचनेन दृढीकृतश्चान्यो हेतुः । एवमेतैर्हेतुभिः शिवेन तदानीमौदासीन्यमवलम्ब्य स्वकीयतेजोलेशोऽपि नाविष्कृतः, यस्मिन्नीषदाविष्कृते कामान्धकादयः शलभतां प्राप्ता इति । अत्र 'शप्तस्त्वया—' इति श्लोके 'अभ्यर्थयन्' इति परस्मैपदप्रयोगस्यार्थयतेरात्मनेपदित्वेऽपि निवृत्तप्रेषणपक्षे हेतुमण्णिचि साधुत्वम्, चक्षिङो ङित्करणेनानुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वज्ञापनाद्वा साधुत्वम् । 'देव्या च—' इति श्लोके 'सैषः' इत्यस्य 'सोऽचि लोपे चेत्पादपूरणम्' इति सूत्रतः साधुत्वम् ॥ ४३—४७ ॥

अथ श्मशानवासदोषस्य परिहारमाह—

दग्धे तवाक्षिदहनेन चराचरेऽस्मि-
न्मत्वाखिलं भुवनमेव महाश्मशानम् ।
तत्र स्थितिं विबुधनाथ तवासहायां
सन्तः श्मशानवसतिं समुदाहरन्ति ॥ ४८ ॥

अत्र भागवतवचनम्—'कामाध्वरत्रिपुरकालगजाद्यनेक-

भूतद्रुहः क्षपयितुः स्तुतये न तत्ते । नन्वन्त्यकाल इदमात्मकृतं स्वनेत्रवह्निस्फुलिङ्गशिखया निहतं स्वयेह ॥' इति ॥४८॥

नन्वेवं महाश्मशानवासस्य परिहारे सत्यपि क्षुद्रेष्वपि श्मशानेषु संध्यानृत्तप्रसिद्धेः कः परिहार इत्याकाङ्क्षायामाह—

संध्यासु भूतगणभैरवभद्रकाली-
संरम्भजन्मजगदापदपासनाय ।
तद्गोचरेषु पितृकाननभूमिषु त्वं
तत्तादृशं गिरिश ताण्डवमातनोषि ॥ ४९ ॥

लिङ्गपुराणे संध्यानृत्तस्य हेतुरुक्तः— पुरा किलापुरुषवध्यदारुकासुरवधार्थं शिवेन प्रेरिता जगन्मातृत्वेन सर्वत्र दयालुतया दारुकस्य त्रैलोक्यकण्टकत्वेऽपि तद्वधचिकीर्षामलभमाना केनचिदंशलेशेन शिवकण्ठं प्रविश्य कालकूटसहस्रांशमात्रं पीत्वा निर्गताऽतिक्रूरा भद्रकाली दारुकासुरं निहत्य भूतगणैः सह श्मशानेषु स्थित्वा लोकान्संहर्तुमुपचक्रमे । तदा शिवः केनचिदंशेन वटुकभैरवो भूत्वा तत्समीपे प्रादुर्भूयातिक्षुधितः स्तन्यार्थी रुदन्नशयिष्ट । तस्मै भद्रकाली दयया स्तन्यं ददौ । स्तन्येन सह तत्पीतं कालकूटं निर्गमय्य पास्यामीत्यभिसंधाय तदर्धपानमात्र एव सोऽप्यतिक्रूरो भूत्वा

तया सह जगत्संहर्तुमारेभे । शिवस्तयोस्तद्भूतगणनाथानां च प्रचारवत्सु श्मशानेषु तत्संनिधावानन्दनृत्तप्रदर्शनेन तेभ्यो जगत्संरक्षणीयमिति मत्वा संध्यासु नृत्तं करोतीति । आनुशासनिके तु श्मशानवासस्तव किमर्थमित्युमया पृष्टेन शिवेन सकलप्रजाहिंसकानां भूतानां श्मशानवासिनां वधस्तत्र गत्वा मया कृतः; मद्वस्थानान्मेध्यमेव तन्मोक्षकाङ्क्षिणामित्युक्तम्— ‘पुरा ब्रह्मासृजद्घोरान्भूतसंघान्बलोद्धतान् । ते भूतसंघा घ्नन्ति स्म सृष्टास्तेनाखिलाः प्रजाः ॥ उग्राणां निग्रहे तेषां सोऽशक्तो मां न्ययोजयत् । घोरा हता मया तत्र रक्षिताश्चाखिलाः प्रजाः ॥ श्मशानादपि मे स्थानान्नान्यन्मेध्यतमं भुवि । मुनिभिर्मेध्यमित्युक्तं स्थानं यत्र वसाम्यहम् ॥ आचरद्भिर्व्रतं रौद्रं मोक्षकामैस्तु सेव्यते । मध्याह्ने संध्ययोस्तत्र नक्षत्रे रुद्रदैवते ॥ आयुष्कामैरशुद्धैर्वा न गन्तव्यमिति स्थितिः। सर्वलोकहितार्थाय श्मशाने निवसाम्यहम् ॥’ इति । एवं श्मशानस्य शिवस्थानत्वादतिपवित्रत्वादेव प्रह्लादेन नृसिंहप्रीत्यर्थं तीर्थयात्रां कुर्वता श्मशानं गत्वा तत्र संनिहितो महाकालः शिवोऽर्चित इत्युक्तं वामनपुराणे— ‘तं दृष्ट्वा स महाकालं कालकालान्तकारिणम् । यमसंयमनं मृत्योर्मृत्युं चित्रचरित्रकम् ॥ श्मशाननिलयं शंभुं भूतनाथं जगत्पतिम् । अर्चयित्वा शूलधरं जगाम निषधान्प्रति ॥’ इति । भागवते

तु निरतिशयस्वात्मानन्दास्वादनित्यतृप्तस्य तुच्छीकृतसकल-विषयभोगस्य सर्वेष्वपि स्नानानुलेपनादिषु तुल्यदृष्टेः शिवस्य कैलासादिष्विव श्मशानेऽपि वासस्तत्तौल्यप्रदर्शनायेति निरूपितम् । तत्र हि 'एतस्यां साध्वि संध्यायां भगवान्भूतभावनः । परितो भूतपार्षद्भिर्वृतो नृत्यति भूतराट् ॥ श्मशानचक्रानिलधूलिधूसरो विकीर्णविद्योतिजटाकलापः । भस्मावगुण्ठामलरुक्मदेहो देवस्त्रिभिः पश्यति देवरस्ते ॥' इति दितिं प्रत्युक्तवता काश्यपेन परमेश्वरस्य सतः शिवस्य श्मशानवासतद्भस्मलेपनादि किमर्थमित्याकाङ्क्षायामुक्तम्— 'न यस्य लोके स्वजनः परोऽथ वा नात्यादृतो नोत कश्चिद्विगर्ह्यः । वयं व्रतैस्तच्चरणापविद्धामाशास्महे तां बत भुक्तभोगाम् ॥ यस्यानवद्यं चरितं मनीषिणो गृणन्त्यविद्यापटलं बिभित्सवः । निरस्तसाम्यातिशयोऽपि यः स्वयं पिशाचचर्यामचरद्गतिः सताम् ॥ हसन्ति यस्याचरितं हि दुर्भगाः स्वात्मानृतस्याविदुषः समीहितम् । यैर्वस्त्रमाल्याभरणानुलेपनैः श्वभोजनं स्वात्मतयोपलालितम् ॥ यत्कारणं विश्वमिदं च माया ब्रह्मादयो यत्कृतसेतुपालाः । आज्ञाकरी तस्य पिशाचचर्या अहो विभूम्नश्चरितं विडम्बनम् ॥' इति ॥ ४९ ॥

एवंविधं शिवचरितरहस्यं देवैरपि ज्ञातुमशक्यम् , तत्स्व-

रूपकथने तव कोऽधिकार इत्याशङ्क्य तद्रहस्यतत्त्वोद्घाटनार्थमिदं न भवति, किं त्वन्यार्थमित्याह—

श्रीकण्ठ तावकचरित्ररहस्यरीति-
मेतादृशीं क इव वेत्ति नरः सुरो वा।
त्वन्नामरूपगुणचिन्तनपुण्यमेव
व्याजेन केनचिदवाप्तुमिह श्रमो मे ॥५०॥

अत्र 'एतादृशीं रीतिम्' इत्यनेन शङ्कास्पददोषान्तरपरिहारोऽपि सूचितः। शिवपार्षदाः खल्वतिक्रूरा गर्हितवृत्तयश्च भूतप्रेतपिशाचासुरराक्षसतिर्यग्जात्यादिरूपा अतिभीषणविकृताननाद्याकाराः सदा मांसभक्षणाद्यतिगर्हितवृत्तयश्च बहवः प्रायेण तत्र तत्र वर्ण्यन्ते। हरिवंशे कैलासयात्रायां तपश्चरते श्रीकृष्णाय वरं दातुं शिवस्य प्रस्थाने तत्पार्षदास्तथैव वर्णिताः। शिवस्य परममङ्गलास्पदत्वे कथमिदमुपपद्यत इति तस्य दोषत्वशङ्कास्पदस्यैवं परिहारः कूर्मपुराणे— 'भगवन्भूतभव्येश महादेवाम्बिकापते। त्वामेव पुत्रमिच्छामि त्वया वा सदृशं सुतम्॥' इति प्रार्थितवन्तं ब्रह्माणं प्रति 'यदर्थितं भगवता तत्करिष्यामि पुत्रक। विज्ञानमैश्वरं दिव्यमुत्पत्स्यति तवानघम्॥' इति तथैव वरं प्रदाय परमशिवस्तस्य मुखान्नीललोहितरुद्रमूर्तिमास्थाय प्रादुर्भूतः 'प्रजाः सृज'

इति नियुक्तः ‘ स्वात्मना सदृशान्रुद्रान्निर्मलान्नीललोहितान् । जरामरणनिर्मुक्तान्ससर्ज परमेश्वरः ॥’ ततस्तेन ‘ मा स्राक्षीरीदृशीरेव प्रजा मृत्युविवर्जिताः । अन्याः सृजस्व भूतेश जन्ममृत्युसमन्विताः ॥’ इति प्रार्थितः ‘ नास्ति मे तादृशः सर्गः सृज त्वं विविधाः प्रजाः ’ इति तमेव सृष्टौ नियुज्य ततः प्रभृति निवृत्तसृष्टिव्यापारो निश्चलः स्थितः । तेन स्थाणुनामा बभूवेत्युपाख्यायते । तत्र शैवलैङ्गादित्यपुराणादिष्वप्येवमेवोपाख्यायते । तत्र शिवेन ये स्वसदृशा रुद्राः सृष्टास्ते स्वोपासनाविशेषैः स्वसायुज्यं लब्धवन्तः परमानन्दरूपं रुद्रस्थानं प्राप्ता एव स्वयं ब्रह्माण्डमध्ये ब्रह्ममुखादाविर्भूतां स्थाणुविशालासंज्ञितां नीललोहितां मूर्तिमास्थाय क्रीडता परमशिवेन लीलार्थं स्वानुचरत्वेन सृष्टाः, अन्येषां शिवसादृश्यासंभवात् । ते च देवगन्धर्वविद्याधरमनुष्यराक्षसासुरभूतप्रेतपिशाचातिर्यग्गमनादिनानाजातिषु सृष्टाः । कूर्मपुराणे सृष्टिनिवृत्त्यनन्तरम् ‘ ततः स भगवान्ब्रह्मा वीक्ष्य देवं त्रिलोचनम् । सहैव मानसै रुद्रैर्वृतो वारिजलोचनः ॥ ज्ञात्वा परतरं भावमैश्वरं ज्ञानचक्षुषा । तुष्टाव जगतामेकं कृत्वा शिरसि चाञ्जलिम् ॥’ इति ब्रह्मणा शिवस्य तत्सृष्टसकलमानसरुद्रसहितस्य स्तोत्रं कृतमित्युपक्रम्य तत्कृतस्तोत्रे ‘ प्रक्षीणशोकैर्विविधैर्भूतैः परिवृताय ते ’ इति तत्सृष्टरुद्राणां

शिवसायुज्यप्राप्त्या वीतसकलशोकानां विविधभूतत्वस्योक्तेस्त एव चानन्तरं तदनुचरत्वं प्राप्ताः, तदनन्तरम्, 'यत्त्वया-भ्यर्थितं ब्रह्मन्पुत्रत्वे भवतोऽनघ। कृतं मया तत्सकलं सृज त्वं विविधं जगत्॥' इत्याद्युपदिष्टवतस्तस्यान्तर्धाने 'सहैव मानसैः पुत्रैः क्षणादन्तरधीयत' इति तत्साहित्योक्तेः, महाभारते शान्तिपर्वणि— 'रुद्राणामपि चेशानं गोप्तारं विदधे प्रभुः। महात्मानं महादेवं विशालाक्षं सनातनम्॥' इति शिवेन तेषां रुद्राणां नीललोहितानुचरत्वं कल्पितमित्युक्तत्वाच्च ; तदिदं शिवसायुज्यं गतानामेव नीललोहितानुचरपारिषदगणत्वं तेषां नानारूपजातितया घोरशान्तविविधाकारत्वं च स्पष्टमेव प्रतिपादितं सौप्तिके पर्वणि— 'द्विपशैलप्रतीकाशाः प्रादुरासन्महारवाः। श्ववराहोष्ट्ररूपाश्च हयगोमायुगोमुखाः॥ ऋक्षमार्जारवदना व्याघ्रद्वीपमुखास्तथा। काकवक्त्राः प्लवमुखाः शुकवक्त्रास्तथैव च॥ महागजाश्ववक्त्राश्च हंसवक्त्राः सितप्रभाः। दार्वाघातमुखाश्चापि चाषवक्त्रास्तथैव च॥ कूर्मनक्रमुखाश्चैव शिंशुमारमुखास्तथा। महामकरवक्त्राश्च श्येनवक्त्रास्तथैव च॥ मेषवक्त्रास्तथैवान्ये तथा च्छागमुखास्तथा। शङ्खाभाः शङ्खवक्त्राश्च शङ्खवर्णास्तथैव च॥ शङ्खमालापरिकराः शङ्खध्वनिसमस्वनाः। जलाधाराः पञ्चशिखास्तथा मुण्डाः कृशोदराः॥ त-

थैवाशिरसो राजन्नृक्षवक्त्रा विभीषणाः । प्रतप्तजिह्वा नेत्रान्त-ज्वालावर्णास्तथैव च ॥ चतुर्दंष्ट्राश्चतुर्जिह्वाः शङ्कुवर्णाः कृशोदराः। किरीटिनो मौलिधरास्तथा कुञ्चितमूर्धजाः ॥ उष्णीषिणो मकुटिनश्चारुवक्त्राः स्वलंकृताः। पद्मोत्पलापीडधरास्तथा मुकुरधारिणः ॥ माहात्म्येन च संयुक्ताः शतशोऽथ सहस्रशः। शतघ्नीचक्रहस्ताश्च तथान्ये मुसलायुधाः ॥ मुसुण्डीपाशहस्ताश्च गदाहस्ताश्च भारत। पृष्ठेषु बद्धेषुचयाश्चित्रचापरणोत्सुकाः ॥ सध्वजाः सपताकाश्च सखड्गाः सपरश्वधाः । महापाशोद्यत-करास्तथा लाङ्गलपाणयः ॥ शूलहस्ताः खड्गहस्ताः सर्पोच्छ्रित-किरीटिनः । महासर्पाङ्गदधराश्चित्राभरणधारिणः ॥ रजो-ध्वजाः पङ्कदिग्धाः सर्वे चित्राम्बरस्रजः । नीलाङ्गाः कमला-ङ्गाश्च मूढवक्त्रास्तथैव च ॥ भेरीशङ्खमृदङ्गांश्च पणवानथ गोमुखान् । अवादयन्पारिषदाः संहृताः कनकप्रभाः ॥ गायमा-नास्तथैवान्ये प्रहृष्टाः पुरुषर्षभाः। लङ्घयन्तः प्लवन्तश्च वल्गा-न्तश्च महाबलाः ॥ धावन्तो जवना बद्धाः पवनोद्धूतमूर्धजाः। म-त्ता इव महानादा विनदन्तो मुहुर्मुहुः ॥ सुभीमा घोररूपाश्च शूलपट्टसपाणयः। विरागवसनाश्चित्राश्चित्रमाल्यानुलेपनाः ॥ रत्नचित्राङ्गदधराः समुद्यतकरास्तथा। हन्तारो द्विषतां शूराः प्रसह्यासह्यविक्रमाः ॥ पातारो स्रग्वसानां च मांसान्त्रकृतभोजनाः । चूडाकलाः कर्णकाराः प्रकृशा मन्दरोदराः ॥ अतिह्र-

स्वातिदीर्घाश्च प्रलम्बाश्चातिभैरवाः । कामकारपराः सिद्धा-स्त्रैलोक्यस्येश्वरेश्वराः ॥ नित्यानन्दाः प्रमुदिता वागीशा गत-मत्सराः । प्राप्याष्टगुणमैश्वर्यं ये च यान्ति न विस्मयम् ॥ येषां विस्मयते नित्यं कर्मभिर्भगवान्भवः । मनोवाक्कायनिर-तान्पाति पुत्रानिवौरसान् ॥ पिबन्त्यसृञ्जि ये चान्ये क्रुद्धा ब्रह्मद्विषस्तथा । श्रुतेन ब्रह्मचर्येण तपसा नियमेन च ॥ ये समाराध्य शूलाङ्कं तत्सायुज्यं समागताः ॥' इति । त एव विविधाकाराः क्रूरशान्ता रुद्रा नीललोहितनियोगाज्जगत्संरक्ष-णार्थं तत्र तत्र स्थिता रुद्राध्याये 'नम इषुमद्भ्यो धन्वाविभ्यश्च' इत्यारभ्य 'श्वपतिभ्यश्च वो नमः' इत्यन्तैश्चतुर्थ्यन्तपदैः प्रतिपादिताः । त एव तत्र 'सहस्राणि सहस्रशः' इत्यनुवाके देवव्रतेषु प्रथमसाम्नि च नानास्थानस्थितसकलदेवनियामक-तया च प्रतिपादिताः । त एवायुष्यसूक्ते 'दिव्या गणा बहु-रूपाः पुराणाः' इति चिराच्छिवसायुज्यं प्राप्य दिव्यस्थाने स्थिताः पुराणाः संततमेव लीलार्थावताराभिप्रायेण बहुरूपाः । एवं शिवेन स्वलीलार्थं कृतायाः पुरा रुद्रसृष्टेस्तिर्यग्योन्याका-रपर्यन्तायाः पृथिव्यां धर्मसंस्थापनार्थमवातितीर्षता नारायणेना-नुषङ्गिकं स्वार्थकं देवान्प्रत्युक्तमिति सभापर्वणि प्रतिपादितम् । तत्र देवान्प्रति भगवद्वचनम्— 'जायध्वं मानुषे लोके सर्व-भूतमहेश्वरः । जङ्गमानि विशालाक्षो भूतान्येवात्मनासृजत् ॥

जायतामिति गोविन्दस्तिर्यग्योनिगतैरपि । तानि सर्वाणि सर्वज्ञः ससुराणि सुरेश्वराः ॥' इति । अत्र 'जायध्वं मानुषे लोके' इति नियोगानन्तरं कथं देवैर्गर्हितं मनुष्यजन्म प्राप्तव्यमिति तेषामनुशयपरिहारार्थमेव भगवानुवाच । सर्वभूतमहेश्वरः सर्वज्ञो नीललोहितरुद्रः ससुराणि सर्वाणि जङ्गमान्येवात्मना देवमनुष्यतिर्यग्विशेषमन्तरेण स्वात्मतुल्यपराक्रमादिनैकरूपेणासृजत् । किमर्थम्? गोविन्दो धर्मसंस्थापनार्थाय भूम्यामवतरन्विष्णुस्तिर्यग्योनिगतैरपि सहायैः सह जायतामित्येतदर्थम् । सर्वेषामविशेषेण सृष्टौ हि तिर्यग्योनिजन्मन्यपि न विचिकित्सा भवति । अतो मानुषजन्मनि भवद्भिर्विचिकित्सा न कार्येति । तदनन्तरं देवैस्तथैव कृतमित्यप्यनन्तरश्लोकेन दर्शितम्— 'त एवमुक्ताः कृष्णेन सर्व एव दिवौकसः । दैत्यदानवहन्तारः संभूता भुवनेश्वराः ॥' इति । अतो विविधाकारेषु शिवपार्षदेषु ये पिशाचादिरूपास्तेषां तत्तज्जात्युचिताहारस्तत्र तत्र प्रतिपादितः । अत्यन्तविष्णुभक्तस्य घण्टाकर्णाख्यस्यापि हि पिशाचस्य मांसरुधिराहारः कैलासयात्रायामेव भूयसा प्रपञ्चितः । शवमांसादिभक्षणं पिशाचादिशास्त्रप्राप्तमित्यपि घण्टाकर्णेन कृष्णं प्रत्युक्तमिति तत्रैव प्रतिपादितम्— 'ब्राह्मणस्य हतस्याथ शवमादाय सत्वरः । द्विधाकृत्य यथा घोरं पिशितं केशशाद्वलम् ॥ ततः खण्डं

समादाय त्वद्भिरभ्युक्ष्य यत्नतः । निधानपात्रेऽतिशुभे नमस्कृत्य जनार्दनम् ॥ इदं प्रोवाच देवेशं प्राञ्जलिः प्रणतः स्थितः । गृहाणेदं जगन्नाथ भक्ष्यं योग्यं तव प्रभो ॥ भवादृशैर्जगन्नाथ ग्राह्यं सर्वात्मना हरे । भक्तिनम्रार्चनं विष्णो नात्र कार्या विचारणा ॥ यद्दत्तं भक्तिनम्रेण ग्राह्यं तत्स्वामिना हरे । नवं सुसंस्कृतं भक्ष्यं ब्राह्मणं शवमुत्तमम् ॥ सर्वेषामेव वर्णानां शवं ब्राह्मणमुत्तमम् । अस्माकं पिशिताशानां शास्त्रैर्निश्चितमेव हि ॥' इति । अतः केषांचिच्छिवपार्षदानां पिशाचादिरूपाणामवस्थानाशनादिसमयेषु स्वजात्युचितरुधिरमांसाहारः स्वामिनो न दोषमावहतीति सर्वमनवद्यम् ॥ एतेन 'लुप्तक्रियायाशुचये मानिने भिन्नसेतवे । अनिच्छन्नप्यदां बालां शूद्रायेव दिशान्गिरम् ॥' इत्यादिकमुक्तवतस्तमोगुणोद्रिक्तस्य दक्षस्य सद्यो दण्डपतनं भागवतादिषु वर्णितमुपश्रुत्यापि ये कुदृष्टयस्तामसास्तथैव प्रलपन्ति 'श्मशानवासनिरतो नित्यमशुचिः पिशाचादिभिः सह वसन्रुद्रः सात्त्विकैर्न सेव्यते' इति ते निरस्ता वेदितव्याः । किं च 'देवा अपि कृतात्मसंशोधनाः शुद्धा एव शिवस्य दर्शनं लभन्ते नान्यथा' इत्यादिवचनैर्बहुधावगतम् । तथा हि हरिवंशे तावत्त्रिपुरवधाकाङ्क्षिभिर्देवैर्ब्रह्मणा प्रेरितैः शिवालयप्राप्त्यर्थं शिवदर्शनलाभार्थं च तपश्चीर्णमित्युक्तम्— 'प्रतिगृह्य तु तद्वाक्यं मनोभिर्वाग्भिरेव च ।

भूमिं प्रपेदिरे सर्वे सह रुद्रैश्च भारत ॥ विन्ध्यपादे च मेरौ च मध्ये च पृथिवीतले । तपसोग्रेण योगज्ञाः सर्वे ते मुनयो नृप ॥ काश्यपेया हरं प्राप्तुं जपन्तो ब्रह्मसंहिताम् । परिधाय च चर्माणि मृदूनि च शुभानि च ॥ स्वयं ज्ञानामतृष्णानामुग्राणां कुरुसत्तम । गृहीतानि विमुक्तानि देवेभ्यो वनचारिभिः ॥ अन्तरिक्षमथोत्पत्य विविशुर्मायायाऽऽवृतम् । हरालयं सुराः सर्वे व्याघ्रचर्मनिवासिनः ॥' इति । वामनपुराणेऽप्युक्तम्— 'ततो मुरारिं सर्वेऽपि समभ्येत्य सुरास्तदा । ऊचुर्देवा नमस्कृत्य जगत्क्षुब्धं चराचरम् ॥ तच्छ्रुत्वा भगवान्प्राह गच्छामो हरमन्दिरम् । स वेत्स्यति महाज्ञानी जगत्संक्षुब्धकारणम् ॥ तथोक्ता वासुदेवेन देवाः शक्रपुरोगमाः । जनार्दनं पुरस्कृत्य जग्मुस्ते हरमन्दिरम् ॥ न तत्र देवं वृषभं ददृशुर्नापि नन्दिनम् । शून्यं गिरिं तु पश्यन्ति ह्यज्ञानतमसाऽऽवृताः ॥ तान्मूढदृष्टीन्संप्रेक्ष्य देवान्विष्णुर्महाद्युतिः । प्रोवाच किं न पश्यध्वं महेशं पुरतः स्थितम् ॥ तमूचुर्नैव देवेशं पश्यामो गिरिजापतिम् । न कारणं तत्र विद्मो येन दृष्टिर्हतास्ति नः ॥ तानुवाच जगन्मूर्तिर्यूयं देवास्तु सागसः । पापिष्ठा गर्भहन्तारो मूढाश्चात्यर्थतत्पराः ॥ तेन ज्ञातं विवेको वो हृतो देवेन शूलिना । येनाग्रतःस्थं तमपि पश्यन्तोऽपि न पश्यथ ॥ तस्मात्कायविशुद्ध्यर्थं देवदृष्टय-

र्थमादरात् । तप्तकृच्छ्रैर्हि संशुद्धाः कुरुध्वं स्थानमीश्वराः ॥'
इति । तदनन्तरं पञ्चतप्तकृच्छ्राचरणपूर्वकं शिवस्य महास्था-
नादिपूजां कृत्वैव देवैः शिवदर्शनं लब्धमित्यग्रे प्रपञ्चितम् ।
स्कान्दे केदारखण्डे तु मेरुपृष्ठे रावणवधोपायं मन्त्रयन्तो
देवा महता तपसा शिवं प्रसाद्य लब्धवरो रावणस्तदधिकत-
पोबलं विना भवद्भिर्जेतुं न शक्यत इति विष्णुना बोधिता-
स्तथा तपः कर्तुमक्षमाः शिवमेव प्रसाद्य रावणं जेष्याम इति
मनीषया शिवलोकं गताः शिवराजधानीद्वारास्थितेन नन्दिके-
श्वरेण तपोभिः कायशोधनमकृत्वा भवद्भिर्द्रष्टुमशक्यः शिव
इति बोधिताः प्राक्स्वस्मिन्कृतापराधत्वेन शप्तं रावणं जिघां-
सता तेन वैकुण्ठं नीत्वा विष्णुः प्रदर्शितः । विष्णुना स्वयं
तपः कर्तुमक्षमेण देवानामभिमतं कार्यं रावणस्य तपोवीर्य-
भ्रंशमत्यन्तानुचितसीतानुरागमोहानुवृत्तिसंपादनेन कारयित्वा
निर्वहणीयमिति तदुपायोपदेशेन देवाः समाश्वासिताः । तदर्थं
च विष्णुः सीतारूपया ब्रह्मविद्यया सह स्वयमवतीर्ण इति
प्रपञ्चितम् । तत्र देवानां शिवदर्शनार्थं तपश्चरणाभावाच्छिव-
दर्शनं नासीदिति स्पष्टमेवोक्तम् । एवमन्वयव्यतिरेकाभ्यां पु-
राणेषु शुद्धैरेव द्रष्टुं शक्यः शिव इति प्रतिपादितम् । भाग-
वतेऽपि दक्षस्य मलिनान्तःकरणस्य यज्ञार्थं शिवानाह्वानोपाये-
नैव तद्दर्शनाभावमुपपाद्य वीरभद्रकृततदध्वरविध्वंसनानन्तरं

दक्षसंरक्षणार्थं देवैः सह कैलासं गत्वा बहुधा प्रसादितवन्तं ब्रह्माणं कटाक्षितवतः शिवस्य प्रसादेनैव सप्रभावशिवावलोकनमासीदिति प्रतिपादितम्— 'स लूयमाने शीर्षे तु दक्षो रुद्राभिवीक्षितः । सद्यः सुप्त इवोद्दीप्तो ददृशे चाग्रतो मृडम् ॥ तदा वृषध्वजद्वेषकलितात्मा प्रजापतिः । शिवावलोकादभवच्छरच्चन्द्रनिभामलः ॥ शिवस्तवाय कृतधीर्नाशक्नोदनुरागतः । औत्कण्ठ्याद्बाष्पकलया संपरेतां सुतां स्मरन् ॥' इति । महाभारतेऽपि बहुकालतपसा शिवं प्रसादितवतो नारायणस्य शिवदर्शनप्रस्तावे शिवस्य बहुतपःक्षीणपापैरेव द्रष्टुं शक्यत्वमुक्तं द्रोणपर्वणि— 'वाचा कैः कैः सुष्टुतं साधुवाग्भिर्जलं दिव्यं धरणी चन्द्रसूर्यौ । हुताशवायू यजमानं सुरेशं नालं द्रष्टुं भिन्नवृत्ता नरा ये ॥ ये चानृता नास्तिकाः पापशीला ब्रह्मद्विषो वाप्यमृतस्य योनिम् । यं पश्यन्ति ब्राह्मणाः साधुवृत्ताः क्षीणे पापे मनसा वीतशोकाः ॥ तन्निष्ठात्मानस्तपसा देवमीड्यं तं भक्त्या वै विश्वरूपं ददर्श ।' इति । अलमतिप्रपञ्चेन । अत्र 'श्रीकण्ठ' इति संबोधनेन भूकैलासवासिनः पार्वतीपरिणेतुरेतद्ब्रह्माण्डाधिपतेः श्रीकण्ठमूर्तेरेवमादीनि चरितानि, न तु साक्षात्परमशिवस्येति सूचितम् ॥ ५० ॥

एवं शिवस्य परब्रह्मभावं साधकप्रमाणैर्बाधकनिरासैश्च

प्रसाध्य स्वस्य तस्मिन्भक्तिदार्ढ्यमाशास्ते—

शश्वच्चेतो मम पशुपते शाल्मलीपुष्पतुल्या-
नन्यान्देवानतिलघुफलप्रापकान्वर्जयित्वा ।
पदाम्भोजे तव परिमिलद्दिव्यभृङ्गावलीढे
चन्द्रापीड श्रयतु सततं चञ्चरीकस्य लीलाम् ॥

दिव्यभृङ्गाः 'ऋच एव मधुकृतः ऋग्वेद एव पुष्पम्, यजूंष्येव मधुकृतः यजुर्वेद एव पुष्पम्, सामान्येव मधुकृतः सामवेद एव पुष्पम्, अथर्वाङ्गिरस एव मधुकृतः इतिहास-पुराणं पुष्पम्' इति च्छन्दोगोपनिषदुक्ता भृङ्गास्तैरवलीढे । तेषां प्रतिपाद्यतया सेवनीय इत्यर्थः ॥ ५१ ॥

अत्रैवं कृतं स्तोत्रं शिवस्य चरणाम्बुजयोः पुष्पाञ्जलिरूपतया समर्पयति—

ब्रह्मोपेन्द्रप्रमुखविनुत ब्रह्मतर्कस्तवोऽयं
भक्तिग्राह्यस्त्वमिति भगवन्निर्मितो भक्तिमात्रात् ।
पादद्वन्द्वे तव करुणया निर्गुणोऽपि त्वदीये
पूजापुष्पप्रकरपदवीमेष पुष्णातु नित्यम् ॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्य-
श्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनुना श्रीमदप्पय-
दीक्षितेन कृतो ब्रह्मतर्कस्तवः संपूर्णः ॥

भावग्राह्यत्वम् 'भावग्राह्यमनीडाख्यं भावाभावकरं शिवम्' इति श्वेताश्वतरमन्त्रेण 'कृतकृत्यस्य तृप्तस्य मम किं क्रियतेऽमरैः। बहिर्वाभ्यन्तरे वापि मया भावो निगृह्यते ॥' इति शिववचनैश्च प्रसिद्धम् ॥ ५२ ॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्य-
श्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनुना श्रीमदप्पय-
दीक्षितेन कृतं ब्रह्मतर्कस्तवविवरणं संपूर्णम् ॥



# पञ्चरत्नस्तुतिः ॥

सव्याख्या

अप्पयदीक्षितैर्विरचिता ॥



॥ श्रीः ॥

# ॥ पञ्चरत्नस्तुतिः ॥



भूतस्य जात इति वारिरुहासनस्य
जातो बृहन्निति हरेश्च जनिः प्रसिद्धा ।
यस्माद्जात इति मन्त्रवरोपदिष्टा-
त्तं रुद्रमेव जनितश्चकितः प्रपद्ये ॥ १ ॥

कतिपयश्रुतिपुराणादिवचनापातपरामर्शप्रसक्तजगत्कारण-भावयोर्ब्रह्मनारायणयोरपि कारणतया कैमुतिकन्यायेन शिवस्य सकलजगत्कारणत्वं प्रथमं प्रसाध्यते । ‘हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्’ इति कमलासनस्य, ‘विष्णुरित्था परमस्य विद्वाञ्जातो बृहन्नभिपाति तृती-

यम्’ इति कमललोचनस्य च प्रसिद्धा जनिर्यस्माद्रुद्राद्भवति। कथमवगम्यते रुद्राद्भवतीति? उच्यते। हिरण्यगर्भमन्त्रे तावत् ‘अग्रे’ इति विशेषणेन ‘यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः। हिरण्यगर्भं जनयामास पूर्वं स नो बुद्ध्या शुभया संयुनक्तु ॥’ इति ‘यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। तं हि देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥’ इति च श्वेताश्वतरोपनिषन्मन्त्रार्थप्रत्यभिज्ञाता हंसेशदेवशिवहररुद्रेशानमहेश्वराद्यभिधानश्रुतिः शिवैकान्तिकीति प्रसाधितमस्माभिः शिवतत्त्वविवेकादिषु। अतस्तदर्थप्रत्यभिज्ञानात्कमलासनजनिस्तावच्छिवादित्यवगम्यते। ‘विष्णुरित्था–’ इति मन्त्रस्यायमर्थः– परमस्य परमेश्वरस्येत्थंभावेन विद्वान्वेदिता। विष्णोः परमेश्वरस्य वेदितृत्वं मन्त्रान्तरेऽपि प्रसिद्धम् ‘विष्णो देव त्वं परमस्य वित्से’ इति। एवंभूतो बृहन्महान्विष्णुः। बृहदिति विशेषणं व्यूहावतारादिरूपान्तरव्यावर्तनेनादिविष्णुरूपप्रसाधनार्थं मन्त्रान्तरेष्वपि प्रसिद्धम् ‘नमो विष्णवे बृहते करोमि’ ‘बृहत्ते विष्णो सुमतिं भजामहे’ इत्यादिषु। स विष्णुर्जातः सञ्शुद्धाशुद्धप्रपञ्चद्वयापेक्षया तृतीयं परमाकाशरूपं परमशिवलोकमभिपाति। व्यूहावताररूपा विष्ण्वंशभेदा हि शुद्धाशुद्धप्रपञ्चद्वयमपि संरक्षन्ति। परमशिवलोकं तु गोलोकस्योर्ध्वभागस्थिते परमशिवलोकप्रा-

रम्भरूपे परमपदे स्थितः साक्षादादिविष्णुरेव संरक्षति । त-
देतत् 'ते ते धामान्युश्मसीगवध्य' इत्यादि श्रुतीतिहासपुरा-
णादिवचनैरवगम्यत इति रत्नत्रयपरीक्षादिषु प्रसाधितमस्मा-
भिः । एवं चाव्र कस्माज्जात इत्याकाङ्क्षायाम् 'परमस्य वि-
द्वान्' इत्यन्यार्थसंनिहितः परम एव तत्कारणत्वेनान्वेति,
अन्यार्थसंनिहितस्याप्याकाङ्क्षयान्वयस्य 'अधिकं वा स्याद्ब-
ह्वर्थत्वादितरैः संनिधानात्' इत्यधिकरणसिद्धत्वात् । स परमो
रुद्र इति कथमवसीयत इत्याकाङ्क्षायामजात इति मन्त्रव-
रोपदिष्टादिति विशेषणम् । 'अजात इत्येवं कश्चिद्भीरुः प्रप-
द्यते रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यम्' इति श्वेताश्व-
तरोपनिषन्मन्त्रेणाजातो रुद्र उपदिष्टः । ततश्च जातस्य विष्णो-
र्जनकाकाङ्क्षायां जातो हिरण्यगर्भादिरेव जनकत्वेनापेक्ष्यते
चेत्तस्यापि जनकाकाङ्क्षा स्यादिति जनकान्तरनिराकाङ्क्षो
रुद्र एव कारणत्वेन परिग्राह्यः, 'एकाह्याद्वा तेषां समत्वात्स्यात्'
इति न्यायात् 'न हि भिक्षुको भिक्षुकान्तरं याचितुमर्हति
सत्यन्यस्मिन्नभिक्षुके' इति तदधिकरणभाष्योदाहृतलौकिकन्या-
याच्च । एवं ब्रह्मविष्ण्वादिसकलजनयिता स्वयं जनिरहितो
रुद्र एव जननाद्भीतैः प्रपत्तव्य इति युक्तं तत्क्रतुन्यायात्
'अजातमिममेवैकं मत्वा जन्मनि भीरवः । रुद्रस्यास्य प्रप-
द्यन्ते रक्षार्थं दक्षिणं मुखम् ॥' इति तदनुसारिशिवपुराणव-

चनाच्च । तदेतदनुभूत्योक्तम् 'जनितश्चकितः प्रपद्ये' इति ॥

एवमुक्ता ब्रह्मनारायणयोः शिवाज्ञानिर्नैच्छिकी स्वतन्त्रा किं तु परतन्त्रेति दर्शयति—

उक्त्वा प्रसूतिमजशौरिहरेश्वराणां
संसूच्य दीपकसहोक्तिभिरन्यनिघ्नाम् ।
तां संन्यधारयदथर्वशिखा हि यस्य
तं सर्वकारणमनादिशिवं प्रपद्ये ॥ २ ॥

अथर्वशिखोपनिषदि श्रूयते— 'सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैर्न कारणं कारणानां धाता ध्याता कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरश्च शंभुराकाशमध्ये' इति । अत्रेन्द्रपदमीश्वरवाचि सदाशिवस्याप्युपलक्षणम् । सर्वमिदं जगत्सृष्टिस्थितिसंहारतिरोधानानुग्रहकर्तृब्रह्मविष्णुरुद्रेश्वरसदाशिवात्मकास्ते संप्रसूयन्ते, सर्वाणि चेन्द्रियाणि भूतैः सह संप्रसूयन्ते, न कारणमेतेषां कारणं शंभुर्न प्रसूयते । तं विशिनष्टि—कारणानां सृष्ट्यादिकर्तॄणां ब्रह्मादीनां धाता पोषयिता, ध्याता सृष्टिसंकल्पकर्ता । अतः कारणं शंभुरेव मुमुक्षुभिर्ध्येय इति श्रुत्यर्थः । अत्र शंभुरेव ध्येयो न ब्रह्मादय इत्येतदुपपादनार्थं ब्रह्मादयः प्रसूतिम-

त्वेन निरूपयितुं प्रस्तुताः । अप्रस्तुतानि चेन्द्रियाणि । अतः प्रस्तुतानामप्रस्तुतानां च प्रसूतिरूपैकक्रियान्वयो दीपकालंकारः । सह भूतैरिति सहोक्तिरलंकारः । एताभ्यां सहोक्तिदीपकाभ्यां भूतेन्द्रियाणामिव ब्रह्मादीनामपि जनिरन्यनिघ्नेति व्यज्यते । एतदर्थः पूर्वार्धेनोक्तः । न कारणमित्याद्यर्थ उत्तरार्धेन ॥ २ ॥

ननु 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः' इत्यादिषु नारायणस्य ब्रह्मरुद्राभ्यां प्रथमभवनवर्णनं श्रूयते; तस्य कथं रुद्राज्जनिः स्यादित्याशङ्क्योदाहृताथर्वशिखावचनानुसारेण प्रथमभवनश्रुतेरर्थान्तरमाह—

**वेदान्तेषु प्रथमभवनं वर्णितं यस्य याभ्यां**
**तद्वत्तस्य प्रसववचसा जन्म तत्ख्यापयित्वा ।**
**यस्यैकस्य स्फुटमजनिता निश्चिता कारणस्य**
**ध्यायामस्तं जनिविहतये शंभुमाकाशमध्ये ॥**

'एको ह वै नारायण आसीत' इत्यादिवेदान्तवाक्येषु यस्य नारायणस्य याभ्यां ब्रह्मरुद्राभ्यां प्रथमभवनं वर्णितं तद्वत्तयोर्ब्रह्मरुद्रयोरिव नारायणस्य प्रसववचसा 'ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते' इति प्रसववचनेन तत्प्रथमभवनं

जन्म ख्यापयित्वा प्रथमजन्मरूपमिति प्रकाश्य यस्य शंभो-रेकस्यैव जनिराहितता स्फुटं वर्णिता तं शंभुं जनिहानये हृदयाकाशमध्ये ध्यायाम इति योजना। एतदुक्तं भवति—अस्ति नित्यसत्तायामप्यासीदिति प्रयोगः, यथा 'सदेव सो-म्येदमग्र आसीत्' इति। अस्ति च षड्भावविकारान्तर्भू-तानित्यसत्तायां जन्मावस्थाविशेषरूपायाम्, यथा 'शक्तेरा-सीत्पराशरः' इति। इह जन्मश्रुत्यनुसाराद्द्वितीयार्थो ग्राह्यः। अथर्वशिखायां ब्रह्मविष्णुरुद्राणां भूतानामिव जन्ममात्रमु-क्तम्। 'एको ह वै—' इत्यादिश्रुतौ नारायणस्य 'आत्मन आकाशः संभूतः' इत्यादिश्रुतावाकाशस्येव प्रथमजन्मोक्तमि-ति विशेषः। अत्रोपबृंहणजातं शिवतत्त्वविवेके प्रपञ्चेनोदा-हृतम्। नन्वेवं सति 'अहमेकः प्रथममासम्' इति शिवव-चनेऽपि प्रथमभवनं प्रथमजन्म स्यादित्याशङ्क्योक्तं यस्यैकस्ये-ति। शिवस्य जननाभावोक्त्या तस्य प्रथमभवनं नित्यसत्तारूपं भवेदिति भावः। एवं ब्रह्मनारायणकारणभावसिद्धेन सकल-जगत्कारणत्वेन शिवस्य परभावः समर्थितः ॥ ३ ॥

अथ ब्रह्मविष्णुरुद्रस्थितसृष्टिस्थितिसंहारोपयोगिशक्तिको-टिनियामकत्वसिद्धेन 'यतो वै—' इत्यादिब्रह्मलक्षणेन सक-लजगन्नियन्तृत्वेन सुरादिसर्वाराध्यलिङ्गरूपत्वालिङ्गेन च तस्य

परभावं समर्थयते—

यद्भ्रूभङ्गैकवश्या विधिहरिगिरिशख्यातिदाः शक्तिकोट्यो
यद्भृत्या देवदेवाः सकलभुवनगाः संनियच्छन्ति विश्वम् ।
यल्लिङ्गं सर्वदेवासुरमनुजमुखैरर्च्यते विश्वरूपं
तस्मै नित्यं नमस्यां प्रवितनुत परब्रह्मणे शंकराय ॥

अत्र प्रथमपादार्थो वराहपुराणे त्रिशक्तिनिर्णयप्रकरणे दर्शितः— ‘ नव कोट्यस्तु चामुण्डाभेदा भिन्ना व्यवस्थिताः । या रौद्री तामसी शक्तिः सा चामुण्डा प्रकीर्तिता ॥ अष्टादश तथा कोट्यो वैष्णव्या भेद उच्यते । या सा तु राजसी शक्तिः पालनी सैव वैष्णवी ॥ या ब्रह्मशक्तिः सत्त्वस्था सानन्ता वै प्रकीर्तिता । एतासां सर्वभेदेषु पृथगेकैकशो धरे ॥ सर्वासां भगवान्रुद्रः सर्वगत्वात्पतिर्भवेत् । यावतीस्ता महाशक्त्यस्तावद्रूपाणि शंकरः ॥ कृतवांस्ताश्च भजते पतिरूपेण सर्वदा ॥’ इति । द्वितीयपादार्थो देवव्रताख्यानां साम्नामाद्ये साम्नि दर्शितः । तत्र हि दिविषदोऽन्तरिक्षसदः पृथिवीषद इत्यादयो द्युप्रभृतिस्थानविशेषेषु स्थिताः परमेश्वरस्य गणनाथा वर्णिताः । अत एव ‘ दिव्या गणा बहुरूपाः पुराणाः ’ इति श्रुत्युक्तान्परमेश्वरस्य गणनाथान्प्रति प्रस्तुत्य प्रतिवचनम्—

'ते हि साक्षाद्दिविषदो ह्यन्तरिक्षसदस्तथा। पृथिवीषद इत्येते देवा देवव्रतैः स्तुताः॥' इति। तेषां तत्तत्स्थान-स्थितसकलभूतनियामकत्वमिति शिवपुराणादिषु प्रपञ्चितम्। देवव्रतेऽपि दिविषदादिपर्यायेषु प्रतिपर्यायमाद्यन्तयोर्देवदेवश-ब्दाभ्यासादेतत्सूचितम्। अत्र देवव्रते दिविषदादिपर्यायेण शुद्धमिश्रमलिनप्रपञ्चनं त्रेधा कृत्वा तेषु स्थिता रुद्रा नमस्कृ-ताः। अप्सुषद इति पर्याये पातालस्थिताः, दिक्षुसद आशा-सद इति पर्याययोर्ब्रह्माण्डाद्बहिर्दिक्षु, विदिक्षु च स्थिता ब्र-ह्माण्डधारका रुद्रा नमस्कृता इति भेदः। शिवस्य लिङ्गं सर्वैरपि सुरासुरमनुष्यप्रभृतिभिः समाराध्यमिति निर्विवादम्। अत्र भारतवचनानि वामनपुराणादिवचनानि च बहुतराण्यु-दाहृतानि शिवतत्त्वविवेके। शिवलिङ्गस्य विश्वरूपत्वं शिव-पुराणादिषु प्रतिपादितम्। शिवपुराणे हि वायुसंहितायां प्र-णवमात्रात्रयप्रतिपाद्यं ब्रह्मविष्णुरुद्रप्रभृति समस्तं जगल्लिङ्गा-दुत्पद्यते लिङ्गे तिष्ठति लिङ्ग एव विलीयत इति लिङ्गस्य विश्वात्मकत्वं प्रपञ्चेन निरूपितम्। इदं च ब्रह्मलिङ्गं भवत्येव यदस्य लिङ्गं विश्वात्मकं सर्वैरपि देवादिभिः समाराध्यत इति। तथा हि— कठवल्लीषु 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' इति सर्वेषां प्राणिनां हृदयमध्यस्थितः परमात्मा निरूपितः। तस्य च 'ऊर्ध्वं प्राणमुन्नयत्यपानं प्र-

त्यगस्यति । मध्ये वामनमासीनं विश्वे देवा उपासते ॥' इति सर्वदेवोपास्यत्वमुक्तम् । तदुक्तिर्मनुष्याणां तदुपासने प्रवृत्त्यर्थेति तत एव मनुष्योपास्यत्वमपि सिद्धम् । अत एव ब्रह्ममीमांसायामपरिच्छिन्नस्य परब्रह्मणः कथमङ्गुष्ठमात्रत्वमित्याशङ्क्य 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' इति सूत्रेण मनुष्यहृदयाब्जकोशानामङ्गुष्ठपरिमाणत्वात्तदन्तरवकाशावच्छिन्नत्वेनाङ्गुष्ठपरिमाणत्वोक्तिं मनुष्याधिकारत्वाच्छास्त्रस्येति तत्समर्थनं कृतम् । हृदयाब्जकोशान्तरवकाशलब्धाङ्गुष्ठपरिमाणस्य लिङ्गाकारत्वमस्तीति तस्य लिङ्गरूपत्वसिद्धिः । स्पष्टं चास्य लिङ्गरूपत्वमाम्नातं हंसोपनिषदि— 'एषोऽसौ परमहंसो भानुकोटिप्रतीकाशो येनेदं व्याप्तं तस्याष्टधा वृत्तिर्भवति, पूर्वदले पुण्ये मतिः, आग्नेये निद्रालस्यादयो भवन्ति, याम्ये क्रौर्ये मतिः, नैर्ऋते पापे मनीषा, वारुण्यां क्रीडायाम, वायव्ये गमनादौ बुद्धिः, सौम्ये रतिप्रीतिः, ऐशाने द्रव्यादानम्, मध्ये वैराग्यम्, केसरे जाग्रदवस्था, कर्णिकायां स्वप्नः, लिङ्गे सुषुप्तिः, पद्मत्यागे तुरीयम्, यदा हंसो नादे विलीनो भवति तत्तुरीयातीतम्' इति । अत्र नादो हृदयाब्जकोशस्योपरि तिष्ठन्ननाहतनादो विवक्षितः, यो बहिरपि शिवलिङ्गस्योपरि तिष्ठन्प्रसिद्धः । तथा हि वायुसंहितायां महालिङ्गप्रादुर्भावे समाम्नायते— 'तत्राकारः श्रुतो

भागे ज्वालालिङ्गस्य दक्षिणे । उकारश्चोत्तरे भागे मकारस्तस्य मध्यतः । अर्धमात्रात्मको नादः श्रूयते लिङ्गमूर्धनि ॥' इति । न तु मूलाधारोद्यन्नादोऽत्र विवक्षितः, कर्णिकां विहाय्योपरिलिङ्गेन संबध्य लिङ्गं पद्मं च त्यक्त्वोपरि गच्छतो मूलाधारसंबन्धाप्रसक्तेः । एवं लिङ्गमूर्धनि लिङ्गस्यानाहतनादस्य 'एवं तिसृभिरेवैतं मात्राभिरखिलं त्रिधा । अभिधाय शिवात्मानं बोधयत्यर्धमात्रया ॥' इति शास्त्रोक्ततदीयरहस्यार्थानुचिन्तनसहितं यत्परिशीलनं तदेव नादानुसंधानमाचक्षते योगिनः । तस्माद्धंसोपनिषदैकार्थ्यापन्नकठवल्लीमन्त्रालोचनया विश्वात्मनादशिरस्कालिङ्गरूपत्वमपि ब्रह्मात्मैकान्तिकं तल्लिङ्गमिति ततोऽपि लिङ्गस्य परब्रह्मत्वसिद्धिरप्रत्यूहा ॥ ४ ॥

नन्वेतदपि यदि ब्रह्मलिङ्गं तर्हि 'शब्दादेव प्रमितः' इति ब्रह्मसूत्रे किमित्येतदप्यङ्गुष्ठमात्रपुरुषस्य परब्रह्मभावनिर्णायकत्वेन न सूत्रितम्? न हि तत्र शब्दग्रहणं लिङ्गस्याप्युपलक्षणमिति वक्तुं शक्यम्, एवकारस्य निर्णायकान्तरासहिष्णुत्वादित्याशङ्क्याह—

आस्तां सूक्ष्मं लिङ्गरूपत्वलिङ्गं
स्याद्ब्रह्मेशानाख्ययैवाल्पमात्रम् ।

इत्येतेनावेदयत्सूत्रकारो
यं ब्रह्माख्यं तं प्रपद्ये महेशम् ॥ ५ ॥

'शब्दादेव' इत्येवकारो न निर्णायकान्तराभावद्योतनार्थः, किं तु निर्णायकान्तरपरामर्शप्रयासनैरपेक्ष्यद्योतनार्थः। तदयं सूत्रार्थः— आस्तामुपनिषदन्तरैकार्थपरामर्शप्रयत्नापेक्षं सूक्ष्मदृष्ट्यान्वेष्यं लिङ्गम्, ईशानशब्दादेव परब्रह्मवाचकादङ्गुष्ठमात्रः पुरुषः परं ब्रह्म भवतीति। एवं च परभावनिर्णयायेशानशब्दस्येतरसाहाय्यकापेक्षां प्रतिक्षिपन्नेवकारस्तत्सद्भावं गमयेदिति तेनैव लिङ्गरूपत्वलिङ्गस्यापि सूत्रकाराशयस्थत्वसिद्धिः। न चेशानशब्दप्रतिपन्नसर्वैश्वर्यलिङ्गसद्भावगमकत्वेन तस्यान्यथासिद्धिः, तस्य श्रुतितः प्रागनुन्मेषणादित्युक्त्यैव तत्सिद्धेरेवकारप्रयोगसूचनीयत्वाभावात्। न ह्यपरामृष्टार्थः शब्दः कश्चिदर्थविशेषश्रुतिर्भवति। न चेशानशब्दः शिवरूपं ब्रह्म प्रत्याययन्यौगिकार्थस्यैश्वर्यस्य प्रत्यायने विलम्बते। प्रत्युतात्र यौगिकार्थप्रत्यायनमेव शीघ्रं भावि न विलम्बि, ऐश्वर्यप्रतियोगिन ईशितव्यस्य भूतभव्यस्य प्रागुपात्तस्य बुद्धिस्थत्वात्। एवं सूत्रवक्त्रा शिवाभिधानश्रुत्याऽवधारणसूचितसद्भावेन लिङ्गरूपत्वलिङ्गेन चाङ्गुष्ठमात्रं ब्रह्म निश्चिन्वन्सूत्रकारः शिवं परं ब्रह्मेति व्यक्तीचकार। यत्तु 'मध्ये वाम-

नमासीनम्' इति श्रुतेन विष्णुवाचिना वामनशब्देनात्र निर्णयो विवक्षित इति तन्न, वामनशब्दस्य सामान्यतो विष्णुनामत्वाभावाद्विशेषतो मन्त्रप्रतिपाद्यहार्दनामत्वाभावाच्च। तस्योपेन्द्रावतारविशेषनामत्वेऽपि प्रकृते तदर्थग्रहणानपेक्षणाद्ध्रस्वत्वसामान्यशक्त्यैव तन्नामत्वेन प्रयोगोपपत्तेर्विशिष्य तत्र शक्तिकल्पनायोगात्तत्कल्पकस्याभियुक्तनामकोशादेरभावात्कथंचित्कल्पनेऽपि प्रकृते परस्परसंनिहितप्राणापानमध्यवर्तित्वोक्त्या ह्रस्वत्वरूढेरेवोन्मेषणाद्रूढ्यन्तरानुन्मेषाच्च। तस्मादुदाहरणमन्त्रगतेन प्रसिद्धतरशिवनामरूढिकेनेशानशब्देनैवात्र निर्णयो विवक्षित इति सर्वं समञ्जसम् ॥ ५ ॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यैः श्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनुभिः श्रीमदप्पयदीक्षितसार्वभौमैर्विरचिता पञ्चरत्नस्तुतिः सव्याख्या संपूर्णा ॥


KOVILOOR MADALAYAM
6381
265

